# परमार्थसुधा

( त्रैमासिक-संस्कृत-पत्रिका )



**वर्षो द्वितीयः ❋ अङ्कः प्रथमः**

आश्विन-कार्तिक-मार्गशीर्षमासाः

संवत्सरः—२०३४

**सम्पादकः—श्रीसत्यनारायणशर्मा**

**सहसम्पादकः—श्री वासुदेवद्विवेदीशास्त्री**

प्रकाशक :—
श्रीसोहनलालः
मन्त्री, परमार्थन्यासः
मुडहू, राँची ( विहार )



प्राप्तिस्थानं, पत्र-लेख-मूल्यादि-प्रेषणसङ्केतश्च—
व्यवस्थापकः—श्रीविद्याधरद्विवेदी
सार्वभौम-संस्कृत-प्रचार-कार्यालयः
डी० ३८।११०, हौजकटोरा, वाराणसी
( उत्तर-प्रदेशः ), दूरभाषः—६६०२१



वार्षिकं मूल्यम्— अष्टौ रूप्यकाणि
अस्याङ्कस्य मूल्यम्— रूप्यकद्वयम्



मुद्रकः—
वैजनाथ प्रसाद
कल्पना प्रेस
रामकटोरा रोड, वाराणसी।

## विषया लेखकाश्च

## परमार्थसूक्तयः

### पुरुषार्थमहत्त्वम्

( १ )

अत्रैकं पौरुषं यत्नं वर्जयित्वेतरा गतिः ।
सर्वदुःखक्षयप्राप्तौ न काचिदुपपद्यते ।। ३।६।१४

( २ )

न तदस्ति जगत्कोशे शुभकर्मानुपातिना ।
यत्पौरुषेण शुद्धेन न समासाद्यते जनैः ।। ३।९२।८

( ३ )

न किञ्चन महाबुद्धे तदस्तीह जगत्त्रये ।
यदनुद्वेगिना नाम पौरुषेण न लभ्यते ।। २।१५७।३८

( ४ )

सर्वमेवेह हि-सदा संसारे रघुनन्दन ।
सम्यक् प्रयुक्तात् सर्वेण पौरुषात् समवाप्यते ।। २।४।८

( ५ )

यो यमर्थं प्रार्थयते तदर्थं चेष्टते क्रमात् ।
अवश्यं स तमाप्नोति न चेदर्धान्निवर्तते ।। २।४।१२

( ६ )

यो यो यथा प्रयतते स स.तत्तत्फलैकभाक् ।
न तु तूष्णीं स्थितेनेह केनचित् प्राप्यते फलम् ।। २।७।१९

—योगवाशिष्ठः

# गुणाढ्यस्य बृहत्कथाविषयकं प्रतीच्यविद्वद्विमर्शनम्

श्रीसत्यनारायणशर्मा

गुणाढ्यस्य बृहत्कथा दैवयोगात्कालेन हारिता सती ऐतिह्यविदां नयनविषयातीता विद्यते। अनल्पसंख्यकानां संस्कृतग्रन्थानां तद्वद्गतिर्बभूव। चीनदेशीयभाषानुवादात् तिबेट-देशीयभाषानुवादाच्च प्रविलुप्तग्रथान् समुद्धर्त्तुं प्रतीच्यविदुषां प्राचाञ्च बहुविधः श्रम आदरमर्हति। द्विषामाक्रमणादज्ञानोपहतत्वाद्दारिद्र्यवशाद् वा बहूनि हस्तलिखितपुस्तकानि तिरोदधिरे। तेषां सर्वेषां समुद्धरणमसम्भवकल्पनाकृतां कृत एव शक्यम्।

गुणाढ्यस्य बृहत्कथा पुराकालिकभारतीयवाङ्मये सोच्छ्रायं स्थानं सुशोभितवतीत्यत्र विपश्चितां वैमत्यं नास्ति। संस्कृतसाहित्येतिहासस्य लब्धयशस्कः प्रणेताऽऽचार्यविंतरनित्सस्तु अत्र नैराश्यमेवावललम्बे। परिज्ञातपाठभेदैर्बृहत्कथास्वरूपपरिज्ञानस्याशक्यत्वात्।

सोमदेवस्य कथासरित्सागरे क्षेमेन्द्रस्य बृहत्कथामञ्जर्याञ्चाद्भुतं साम्यं वीक्ष्यते एतदर्थं बृहत्कथायाः स्वरूपनिर्धारणं तदानीन्तने कालेऽकरणीयं न प्रतीयते स्म, शशविषाणा-न्वेषणवत्। किन्तु बुद्धस्वामिनः बृहत्कथाश्लोकसंग्रहावाप्तितश्चिकीर्षितस्यास्य असौकर्यं भृशं ववृधे। कथासरित्सागराद् बृहत्कथामञ्जर्याश्च ग्रन्थस्यास्य वैभिन्न्यं गवेषकान् विस्मापयाञ्चक्रे। ननु केनोपायेन जटिलतेयं समाधीयेत?

गुणाढ्यस्तस्य बृहत्कथेति नाम निबन्धे लाकोत्ताभिधः प्रतीच्यगवेषकः सन्दर्भेऽस्मिन् यत्समादधे तदाचार्याल्सदोर्फस्य मते आदरमर्हति। विंशशतकस्यादौ फ्रांसीसिभाषायामनु-सन्धाताऽसौ कश्मीरेषु सम्पादितयोरुभयोर्ग्रन्थयोः प्रभवो बृहत्कथायाः किञ्चिद् भ्रष्टं संस्करण-मासीदिति प्रतिपादितवान्। मूलग्रन्थयोरंशमात्रमेव संस्करणेऽस्मिन् स्वच्छन्दानुवर्त्तितया प्रयुयुजे। नूत्ना भागाश्च सन्निवेशिताः। मूलग्रन्थस्य कथाक्रमः कथासंयोजनञ्च परिववृताते। महत्यसङ्गतिरपि सम्पादकैर्विहिता। अनन्वयात्मिका कृतिरियं मूलग्रन्थाद् विभिद्यते। लाकोत्तस्य ऊहापोहानुसारं बुद्धस्वामिनो बृहत्कथाश्लोकसंग्रहे गुणाढ्यस्य बृहत्कथायाः शुद्धं रूपं प्रस्तौति, विषयसामग्रीमधिकृत्य, कथासंयोजनमधिकृत्य च। अनुसन्धातॄणामसौकर्यं वर्धयन्ती बुद्धस्वामिनः कृतिरपि विलुलोप, प्रथमं चतुर्थांशं विहाय। तथापि गुणाढ्यस्य ग्रन्थस्वरूप-मवगमयितुं शेषांशोऽयमुपयुज्यतेतराम्। अष्टाधिकनवशताधिकसहस्रमिते खिस्ताब्देऽनु-

सन्धाताऽसौ मतमिदं प्रकटयाम्बभूव। तदाप्रभृति बृहत्कथाविषयकं किञ्चिदपि सन्तोषावहं समाधानं दृक्पथं नायातमिति स्वीकुर्वाण आचार्याल्सदोर्फो रोमनगरस्य ऊनविंशतितमे प्राच्य-सम्मेलने अष्टात्रिंशदधिकनवशताधिकसहस्रमिते खिस्ताब्देऽभिनवमेकं समाधानं व्यक्तीचकार।

इदन्तु जैनधर्मानुसन्धातारो जानन्ति यज्जैनधर्मावलम्बिभिर्ब्राह्मणानां कथावस्तूनि बहुधोपयुज्यन्ते स्म। जैनग्रन्थेषु बृहत्कथाया एकं, पुरातनं विस्तृतञ्च संस्करणं लभ्यते, कथामञ्जर्याः कथासरित्सागराद् भिन्नं स्वतन्त्रञ्च। प्रथमदृष्टौ ग्रन्थोऽयमित्थम्भूतो नो परिचीयत इत्याचार्याल्सदोर्फः स्वीकरोति। नरवाहनदत्तस्य साहसिकाभियानानि जैनीयैर्वसु-देवेऽध्यारोपितानि। वसुदेवहिण्डी जैनकृष्णकथानामङ्गमस्ति। पुरावृत्ताख्यानानाञ्च। हेम-चन्द्रस्य त्रिषष्टिशलाकापुरुषचरिते जैनबृहत्कथायाः संघटनमवलोक्यते। चतुःषष्टिर्वत्सरा व्यपगता अस्य मुद्रणादूर्ध्वम्। कृष्णकथाया अपरासु जैनविकृतिषु यथा क्षीणांश एव जैनीयैः प्रयुयुजे तथैव अस्मिन् ग्रन्थेऽपि। किन्तु संघदासस्य वसुदेवहिण्डीत्याख्ये ग्रन्थे जैनबृहत्कथाया वैशिष्ट्यं स्फुटीभवति। गद्यग्रन्थोऽयं प्राकृतभाषायामुपनिबद्धोऽस्ति। ग्रन्थस्यास्य मुद्रणात् जैनबृहत्कथायाः परिज्ञानं सुलभीबभूव।

ननु ग्रन्थस्यास्य प्रणयनं कस्मिन् शतके बभूव प्रश्नस्यास्य समाधानं गुणाढ्यस्य बृहत्कथायाः कालनिर्धारणार्थमुपयुज्यतेतमाम्। आवश्यकचूर्णीत्याख्ये जैनग्रन्थे त्रिकृत्वः, कृतेरस्याः समुल्लेखात् कृतिरियं खिस्तीयषष्ठशतकादर्वाचीना कथमपि भवितुं नार्हति। अपरञ्च भाषाशैल्या अतिपुरातनत्वात् षष्ठशतकादपि प्रत्नामिमां मन्तुमाचार्याल्सदोर्फ उत्सहते स्म। भवतु तावत्। बृहत्कथायाः परिज्ञातसंस्करणे प्राकृतभाषोपनिबद्धा कृतिरियं पुरातनतमाऽस्तीत्यत्र आल्सदोर्फस्य दृष्टौ विशयावकाशो नास्ति।

आचार्ययाकोवी तु खिस्तीयाब्दस्य समारम्भ एव जैनपुरावृत्तकथाप्रणयनं परि-समाप्तमिति निश्चिकाय। वासुदेवहिण्ड्यामपि बृहत्कथासामग्री कृष्णाख्यानानामंशीभूता विद्यते। एतेषां ग्रहणस्य विकृतेः कालः क्व निधातव्यः? आचार्ययाकोवीः खिस्तात् शतत्रय-पूर्वं निदधे। तस्मिन् युगेऽपि बृहत्कथा सुप्रथिता बहुपुरातनी कृतिरासीदित्याचार्याल्सदोर्फ औहिष्ट। अमुष्य मते बृहत्कथायाः प्रणयनकालं विद्वद्भिरूहितात्कालाद्बहुपुरातनं मन्तुं जैनसंस्करणमिदं विवशीकुरुते। आचार्यब्यूलरस्तु प्रथमे द्वितीये वा खिस्तशतके, गवेषको लाकोत्तस्तु तृतीये खिस्तशतके बृहत्कथाप्रणयनकालं निश्चिक्याते, परमाचार्याल्सदोर्फस्य दृष्टौ खिस्तात्पुरातनीयम्।

ननु गुणाढ्यस्य प्रविलुप्तग्रन्थस्य रूपरेखा कथम्भूताऽऽसीत्? लाकोत्तानुसारं ग्रन्था-रम्भे वत्सराजस्य उदयनस्य तस्य महिष्योः पद्मावत्या वासवदत्तायाश्च कथा आसन्। वासव-दत्तासूनुर्नरवाहनदत्तो मदनमञ्जुकायामभिलाषं बध्नाति, वत्सराजस्यादेशमुल्लंघ्य सुकुमारी-

मिमां परिणयति। गच्छता कालेन मदनमञ्जुका विद्याधरेण केनचिद् धृता। स्वां वल्लभामन्वेषयन्नसौ विप्रयोगप्रविकलो विद्याधराणां मानवानाञ्च लोके बहूनि साहसिकान्यद्भुतानि कर्माणि कृतवान्। संघर्षरतोऽसावन्ते सङ्गरेऽरातीन् विजित्य मदनमञ्जुकां प्रेयसीं संप्राप्य विद्याधराणां चक्रवर्त्तित्वं लेभे। नानाविधसंघर्षेषु प्रतिवारमसौ रूपसीमेकां प्राप्तवान्। गुणाढ्यो रूपसीनामुपलब्धिमिमां लम्भ इति नाम्ना निर्दिदेश। अस्माद्धेतोर्नरवाहनदत्तकथा वेगवतीलम्भोऽजिनावतीलम्भः, प्रियदर्शनालम्भ इत्यादिष्वध्यायेषु प्रविभज्यते। इति शम्।

( २ )

जैनीयैर्गुणाढ्यस्य कथाः कृष्णकथासु संनिवेशिताः। वसुदेवोऽग्रजेनावमानितो भूत्वा गृहं तत्याज। इतस्ततः परिभ्रमन्नसौ साहसिकानि कृत्यानि निष्पाद्य अन्ते रोहिणीमन्तिमदयितां परिणिन्ये। संयोगवशात्तस्य भ्राता तस्य नयनविषयं ययौ। परस्पराभिमुखं प्राप्तौ तावुभौ वेश्मनि प्रत्यावर्त्तेते। आख्यानकेऽस्मिन्नाहवानां वर्णनं किल समुपेक्ष्यते। मदनमञ्जुकाख्यानं केन हेतुना कृष्णसूनौ शाम्बे आपरिणयादध्यारोपितमिति गवेषकमाल्सदोर्फं खलु विस्मापयाञ्चक्रे। गुणाढ्यस्य बृहत्कथायाः कथासंघटनमधिकृत्य जैनमतावलम्बिभिरिमाः परिवृत्तयो विहिता इत्यत्राध्याहर्त्तव्यम्। आचार्याल्सदोर्फस्य मते जैनग्रन्थोऽयं प्रविलुप्तबृहत्कथाविषयिकामपरिज्ञातसामग्रीं विज्ञापयति।

अथ कश्मीराणां संस्करणमष्टादशलम्बकात्मकमस्ति। तत्कथम्? लम्बकस्य कोऽर्थः? लम्भक इति पदस्य विकृतिरियम्। लाकोत्तस्य आल्सदोर्फस्य च दृष्टौ मूलग्रन्थाद् भिन्नेयं पद्धतिः। लम्भकः परिच्छेदानां संज्ञाऽऽसीद् येषु नरवाहनदत्तः प्रकृतिसुभगा रमण्य आप्नोति। उदयनकथादीनां संज्ञेयं भवितुं न शक्नोति। श्लोकसंग्रहः सर्गेषु प्रविभक्तः साहित्यशास्त्रानुसारि काव्यमस्ति। प्राप्तांशेऽष्टाविंशतिसर्गाः सन्ति। बहुषु सर्गान्तेषु लाभ इति लम्भसमानार्थकं पदं ग्रन्थकृता प्रयुयुजे। रामायणवदेव गुणाढ्यस्य बृहत्कथाऽपि काण्डेषु प्रविभक्ता आसीदिति लाकोत्तस्य मतम्। जैनीयानां संस्करणे एव केवलं लम्भ इति पदं तस्य मौलिकार्थे प्रयुयुजे; नरवाहनदत्तस्यागयाजमनोहरवपुषां रूपसीनां सम्प्राप्तिप्रसङ्गात्मकेषु परिच्छेदेषु। मुख्यभागोऽयं शरीरमित्यभिधीयते। कथोत्पत्तिः, पीठिका, मुखं, प्रतिमुखं पूर्ववर्त्तिनोऽधिकाराः सन्ति। षट्सु अधिकारेषु पञ्चमोऽयम्। उपसंहाराभिधोऽधिकारोऽनुपलभ्योऽस्ति। बृहत्कथामञ्जर्यामेव केवलमुपसंहारो वीक्ष्यते। लाकोत्तस्य मते उपसंहाराभिधानस्यास्य गुर्वर्थता नास्ति, क्षेमेन्द्रेण स्वयं संज्ञेयं प्रायोजि इत्यपि गवेषकोऽयं शशङ्के। आचार्याल्सदोर्फस्य दृष्टौ जैनीयसंस्करणस्यास्य मूलग्रन्थानुवर्त्तिता इत्थमुपपद्यते।

कथोत्पत्तिर्जैनीयानां संयोजनं, न तु पीठिका, मुखञ्च। बुद्धस्वामिनः कृतौ तृतीयसर्गः कथामुखमिति संज्ञितोऽस्ति, आरम्भिकं सर्गद्वयमभिधानरहितमस्ति, कथामुखस्य प्रथमांशवत्।

कथामुखे कथाया भूमिका विद्यते; कथं, कदा चेदं घटितवत् यन्नरवाहनदत्तः स्वां कथां स्वयमेव अचीकथत्। कश्मीराणां कथासु द्वितीयलम्बकः कथामुखमित्यभिधीयते, उदयनाख्यानविषयकः। बुद्धस्वामिना तु कथामुखस्य प्रकरणं ग्रन्थपरिसमाप्तावानीतम्। नरवाहनदत्तस्य कथा अपि उत्तमपुरुषेऽवर्णिषत, न तु प्रथमपुरुषे। कश्मीराणां संस्करणस्य वैरूप्यं, बुद्धस्वामिनो बृहत्कथाश्लोकसंग्रहस्य मूलग्रन्थानुवर्त्तित्वमित्थं लाकोत्ताह्वयो गवेषकः सिसाधयिषति स्म। आल्सदोर्फस्य दृष्टौ जैनीयानां संस्करणाल्लाकोत्तस्याभ्यूहनं दृढीभवति। वसुदेवः स्वां कथां स्वयं वर्णयाञ्चक्रे उत्तमपुरुषे। कथामुखाज्ज्ञायते कालो हेतुश्च।

कश्मीराणां संस्करणयोः कथामुखं प्रथमलम्बक इत्यभिधीयते गुणाढ्योपाख्यानविषयकम्। मूलबृहत्कथायामस्यादर्शनं विस्पष्टम्। बुद्धस्वामिनः कृतावपि कथापीठ उपाख्यानञ्चेदं दृक्पथं नायातः। कथामुखन्तु तावद् विद्यते। अस्माद्धेतोर्लाकोत्तो गुणाढ्यस्य कृतौ कथापीठस्याभावं प्रतिपादयाञ्चक्रे। आचार्याल्सदोर्फः सन्दर्भेऽस्मिन्नन्यामेव दृष्टिमवलम्बितवान्। वसुदेवहिण्डीत्याख्यस्य जैनग्रन्थस्य पीठिकातो गुणाढ्यस्य कृतौ कथापीठस्याभावपरिकल्पना निरस्यते। ननु तस्य वर्ण्यविषयः कथम्भूत आसीत्? आचार्याल्सदोर्फस्योत्तरमत्र विषये विस्पष्टमस्ति। कथापीठेऽस्मिन् गुणाढ्यस्य चरितं कृष्णकथांशं वा कल्पयितुं यत्नो न विधेयः। उदयनस्य, वासवदत्तायाः, पद्मावत्याश्च कथानां सद्भावो मूलग्रन्थस्य कथापीठेऽनुमातुं शक्यते। बुद्धस्वामिनः कृतौ तासामसद्भावाद् विद्वांसस्तस्या असम्पूर्णतां जुघुषुः। अपरे मूलबृहत्कथायामुदयनादीनां कथानामसद्भावं मेनिरे। आचार्याल्सदोर्फस्तु जैनग्रन्थानुशीलनाद् मूलबृहत्कथायां कथामुखात्प्राक् कथापीठे उदयनकथावर्णनस्यास्तित्वं मनागपि न शङ्कते। बुद्धस्वामिनाऽकारणमिमा न अत्याजिषत। कश्मीराणां सम्पादकौ कथापीठस्य मूलविषयं ग्रन्थपरिसमाप्तौ वर्णितवन्तौ, बृहत्कथासामग्र्याः पुनर्घटनचेष्टासु कालक्रमस्यासौकर्यानरासार्थम्।

तर्हि मूलबृहत्कथायाः संघटनं कथम्भूतमासीत्? आचार्याल्सदोर्फोऽसन्दिहानस्तां भागचतुष्टये व्यभाक्षीत्। कथापीठः, कथामुखं, लम्भाः, उपसंहारश्च। कथापीठे राज्ञ उदयनस्य तस्य महिष्योः कथा आसन्। कथामुखे नरवाहनदत्त आख्यायकरूपेणात्मानं प्राचीकटत्। लम्भेषु स स्वां कथामवीवर्णच्च।

नेपालदेशीयस्य बुद्धस्वामिनः संस्करणस्य लाकोत्तप्रतिपादिता मूलग्रन्थानुगामिता जैनग्रन्थादपि दृढीभवति। मदनकास्थानापन्ना सुहिरण्या ग्रन्थेऽस्मिन् कस्यचिद् बौद्धनृपतेः सुता नास्ति। वसुदेवभार्या गन्धर्वदत्ता बुद्धस्वामिनो वर्णनवदेव कस्यचिद् वणिजो दत्तकपुत्री विद्यते। कश्मीराणां संस्करणे वणिक्पुत्रोऽसौ गन्धर्वराजः कारितः। वणिजः कथानामासामशेषु सुविख्यातस्यैकाधिकसहस्ररजनीकथानकस्योद्गमो निरीक्ष्यत इति नाविदितं प्रेक्षावताम्। कश्मीराणां संस्करणे सम्पादकैरिमाः सहेतुकमत्याजिषत। वसुदेवहिण्ड्यान्तु

बुद्धस्वामिनो वर्णनात्किञ्चिद् भिद्यमाना अपि इमाः सादृश्यं खलु बिभ्रति। श्लोकसंग्रहस्य गुर्वर्थानां बहुसंख्यकांशानां कश्मीराणां संस्करणयोरभावोऽस्ति, परं जैनीयग्रन्थेऽस्मिन् ते सर्वशः वीक्ष्यन्ते।

आचार्याल्सदोर्फस्य मते कश्मीराणां संस्करणे पुरातनबृहत्कथाया विपुलांशं ग्रन्थकारः प्रजहौ; अपरञ्च संस्करणस्यास्य विपुलांशो मूलबृहत्कथातो नोदभूत्। बुद्धस्वामिनो ग्रन्थाज्जैनग्रन्थाच्च मूलग्रन्थपरिकल्पनायाः कृच्छ्रसाध्यत्वं किल प्रविलीयते। बृहत्कथायां प्रस्फुटितया गुणाढ्यस्य काव्यप्रतिभया जैनग्रन्थोऽयमनुसन्धातॄन् परिचाययति। आचार्यविंतरनित्सेन भारतीयसाहित्येतिहासे बुद्धस्वामी उच्चैः प्रशशंसे। आल्सदोर्फस्य मतानुसारं श्लाघेयं सम्प्रति निर्विचिकित्सं संस्कृतसाहित्यरसास्वादकैर्गुणाढ्यं प्रति कथयितव्या। इति शम्।

# योगशास्त्रानुसारमस्मितायाः स्वरूपम्

डॉ० चन्द्रकान्तशुक्लः

साम्प्रतं समालोचनाजगति अहंबोधिका परिचितिबोधिका चास्मिता योगशास्त्रानुसारमपरा एव। पतञ्जलिमुनिना योगशास्त्रस्य साधनपादे "अविद्यास्मितारागद्वेषाभिनिवेशाः" [१] पञ्चक्लेशाः परिगणिताः। सांख्याचार्यैः पञ्चक्लेशाः तमो, मोहो, महामोहस्तामिस्रान्धतामिस्र इति शब्दैः कथिताः। क्लेशेषु अविद्या एव सर्वप्रमुखा अन्यक्लेशानामुत्पादिका चास्ति। "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" [२] इति योगशास्त्रानुसारमविद्या। अस्मिता तु "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" [३]। दृक्शक्तिः द्रष्टा पुरुषः आत्मा वा, दर्शनशक्तिश्च बुद्धिः। "पश्यतीति दृक्" अनेन निर्वचनेन दृक्शक्तिः द्रष्टा पुरुषः कथ्यते। "दृश्यते इति दर्शनम्" अनया व्युत्पत्त्या विषयाकारा दर्शनशक्तिः बुद्धिरिति कथ्यते। दृक्शक्तिः दर्शनशक्तिश्च द्वे अपि पूर्णतो भिन्ने स्तः, परन्तु यत्र द्वयोरेकत्वं परिलक्ष्यते तत्रैव अस्मिता क्लेशो भवति। पुरुषो द्रष्टा अस्ति चित्तञ्च तस्य दर्शकं, एकं कारणमस्ति। पुरुषः चेतनोऽस्ति चित्तञ्च जडम्। पुरुषः क्रियारहितः चित्तञ्च क्रियायुक्तं प्रसवधर्मोपेतञ्च। पुरुषः केवलः चित्तं त्रिगुणमयञ्च। पुरुषोऽपरिणामी चित्तं परिणामशीलञ्च। इत्थं द्वावपि पूर्णतया भिन्नौ स्तः, परमविद्यया द्वयोरेकत्वं परिदृश्यते। इदमेव एकत्वमस्मिता क्लेश इति। यदा अनात्मयुक्तायां बुद्धौ आत्मबुद्धिरूपाऽविद्या भवति तस्मिन्नेव काले अस्मिता प्रादुर्भवति। अविद्यावस्थायामपि सामान्यरूपेण अहंबुद्धिस्तिष्ठति, तथापि तस्याः बुद्धेः विषयो भेदाभेदौ द्वावपि तिष्ठतः, यतः तस्मिन् काले अभेदात्मकत्वं न जायते। ततः परं बुद्धौ विद्यमानानां गुणानां पुरुषेषु आधानेन "अहमीश्वरः" "अहं भोगी" इतिरूपेण यः एकत्वस्य भ्रमः स एव अस्मिता क्लेश इति। यावत्पर्यन्तमेकत्वस्य भ्रमः नोत्पद्यते तावत्पर्यन्तम् अध्यासमात्रेण भोगस्य सिद्धिर्न भवति, यतः बुद्धिस्तु परिणामिनी आत्मा चापरिणामी। अतः द्वावपि पूर्णतया भिन्नौ। अस्यां दशायां द्वयोर्मध्ये

१—पातञ्जलयोगदर्शने २।३

२—तत्रैव २।५

३—तत्रैव २।६

एकत्वस्य प्रतीतिं विना भोगो भवितुं नार्हति । अतएव द्वयोर्मध्ये भोगसिद्ध्यर्थमभेदस्य भ्रमः आवश्यकः ।

विषयस्याकारे यः बुद्धेः परिणामः तदेव ज्ञानं कथ्यते । यद्यपि ज्ञानं बुद्धेरेव गुणोऽस्ति, तथापि बुद्ध्या संयुक्ते आत्मन्यपि तद् भासते । अतएव "आत्मा ज्ञानी" इति लोकव्यवहारः दृश्यते । निर्लिप्तः आत्मा अपि बुद्धिगतविषयाकारस्य ग्रहणरूपप्रतीतेरनुसरणं कुर्वन् बुद्धे-र्भिन्नोऽपि बुद्धिवद् भासते । अस्यामवस्थायामात्मा बुद्धौ विद्यमानं सुखदुःखादिकं स्वकीयमेव मन्यते, क्लिश्यते च । वस्तुतः ज्ञानन्तु अन्तःकरणस्यैव परिणामविशेषोऽस्ति । बुद्धिवृत्तौ विषयाकारस्य यत् समर्पणं, तदेव विषयज्ञानम्, विषयाकारैरुपरक्ता च या बुद्धिवृत्तिः सा एव चिच्छक्तिः आत्मनि प्रतिबिम्बिता भवति । आत्मनि यत् प्रतिविम्बनं भवति तत्तु सामर्थ्य-विशिष्टस्य चित्तस्य मन्यते, यथा जले प्रतिविम्बनं रूपवतः स्थूलपदार्थस्यैव भवति । तस्मिन् समये बुद्धिवृत्तौ आत्मनि चाभेदप्रतीतिर्भवति, अतः बुद्धिवृत्त्याऽभिन्नः आत्मा कस्याप्यर्थ-स्यानुभवं करोति ।

पतञ्जलिमुनिना सम्प्रज्ञातासम्प्रज्ञातसमाधयोर्निरूपणप्रसङ्गे सम्प्रज्ञातसमाधिः चतुष्प्र-कारकः स्वीकृतः—"वितर्कविचारानन्दास्मितानुगमात् सम्प्रज्ञातः" ।[१] सूत्रेऽस्मिन्नपि अस्मिता-शब्दः सम्प्रज्ञातस्यान्तिमावस्थारूपेणास्ति । तत्र स्थूलभूतस्थूलेन्द्रियविषयिका ग्राह्यभावना वितर्कानुगतः सम्प्रज्ञातः, सूक्ष्मभूत— (तन्मात्र) सूक्ष्मेन्द्रियविषयिका च ग्राह्यभावना विचारा-नुगतः सम्प्रज्ञातः, तन्मात्रेन्द्रियाणां कारणभूताहङ्कारविषयिका ग्राह्यभावना आनन्दानुगतः सम्प्रज्ञातः, चेतनेन प्रतिबिम्बितः चित्तसत्वः बीजरूपाहङ्कारयुक्ता ग्रहीतृभावना अस्मितानुगतः सम्प्रज्ञातश्च । सानन्दसमाधावपि क्षणिकत्वानादित्वादिदोषदुष्टतया तस्यापि त्यागः, तस्मिन्नपि यो विरागः तथा तेन विरागेण समुत्पन्नः जीवेश्वरयोः स्वरूपस्य जडभिन्नात्माकाररूपे यः साक्षात्कारः, स एव अस्मितानुगतः सम्प्रज्ञातः । अस्यां दशायां रजोगुणतमोगुणयोः लेशमा-त्रेणानभिभूतः यच्छुद्धसत्त्वः तस्यापि तिरोभावः चिच्छक्तेश्चाविर्भावो जायते । दशायामस्यां च 'अस्मि' इत्याकारविशिष्टं ज्ञानं भवति । अस्मितायामपि पूर्वं जीवात्मविषयिणी अस्मिता भवति, ततः परं ततोऽपि सूक्ष्मतमविषयिणी अस्मिता भवति । पूर्वमस्मितायाः विषयः जीवात्मा पश्चाच्च भावनायाः दृढत्वात् केवलमात्मतत्त्वमेवास्मितायाः विषयः जायते । एषा स्थिति-रेव चित्तस्यान्तिमा स्थितिर्भवति । एष एव समाधिः अस्मितया युक्त इति । अस्मिन् समाधौ चित्तस्य संस्कार एवावशिष्यते । सम्प्रज्ञातस्य ये चत्वारः भेदाः तेषु चतुष्प्रकाराः चित्तभूमयः भवन्ति—मधुमती, मधुप्रतीका, विशोका, संस्कारशेषा च । तत्र अस्मितायां संस्कारशेषा चित्तभूमिस्तिष्ठति ।

---

१—तत्रैव १।१७

अस्मिता अहंकारस्य कारणरूपास्ति, अतएव अहङ्कारात् सूक्ष्मतरा सा। यदा चित्तस्यैकाग्रता स्वकीयचरमस्थितौ तिष्ठति तदा तस्याः वास्तविकं स्वरूपं परिदृश्यते, अयमेव समाधिः अस्मितानुगतः। आनन्दानुगतं समाधिं प्राप्य यदा साधकः सन्तुष्टो भवति तदा स एव 'विदेह' इति कथ्यते। यस्तु आनन्दानुगतं समाधिं प्राप्य पुनरपि अग्रे परिसर्पति स अस्मितानुगतं समाधिं समधिगच्छति। तस्मिन् समये 'अहमस्मि सुखी, अहमस्मि सुखी' इत्याकारा वृत्तिः क्षीयते। 'अस्मि, अस्मि' इत्येवंकारा एकैव वृत्तिरवशिष्यते। केचन इमां स्थितिमेव प्राप्य सन्तुष्टाः सञ्जायन्ते अग्रे च नैव परिसर्पन्ति तदा ते 'प्रकृतिलया' इति कथ्यन्ते। एतस्मिन् विषये व्याख्याकाराः भोजदेवाः कथयन्ति—"ततः परं रजस्तमोलेशानभिभूतं शुद्धसत्त्वमालम्बनीकृत्य या प्रवर्त्तते भावना तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावात् चितिशक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते। न चाहङ्कारास्मितयोरभेदः, यतो यत्रान्तःकरणमहमिति उल्लेखयन् विषयान् वेदयते सः अहङ्कारः। यत्रान्तर्मुखतया प्रतिलोमपरिणामे प्रकृतिलीने चेतसि सत्तामात्रमवभाति साऽस्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषाः परं परमात्मानं पुरुषं न पश्यन्ति तेषां चेतसि स्वकारणे लयमुपागते प्रकृतिलया इत्युच्यन्ते।"[1] विदेहप्रकृतिलययोगिनां योगो भवप्रत्ययः कथ्यते।

एषु वितर्कः चतुष्टयानुगतः, यतः कार्ये कारणमनुगतरूपेण तिष्ठति, विचारः त्रितयानुगतः, आनन्दः द्वयानुगतः, अस्मिता च एकानुगता। अस्मिन् विषये भाष्यकाराः व्यासमहोदया अपि कथयन्ति—"तत्र प्रथमश्चतुष्टयानुगतः सवितर्कः। द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकलोऽस्मितामात्र इति। सर्व एते सालम्बनाः समाधयः।"[2]

अस्मितानामकेऽहङ्कारे समापन्नं चित्तं निस्तरङ्गसमुद्र इव शान्तम्, अनन्तम्, सत्त्वप्रधानाहङ्कारवच्च भवति। एतस्मिन् विषये व्यासमहोदयाः कथयन्ति—"तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति।"[3] पञ्चशिखाचार्यैरपि एतस्मिन् विषये कथितमस्ति—"तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत्संप्रजानीत इति।"[4] तं सूक्ष्मरूपमात्मानमनुचिन्त्य 'अस्मि, अस्मि' इत्येवं स्वकीयं रूपं साधकः मन्यते।

---

१—१।१७ पातञ्जलयोगसूत्रे भोजवृत्तौ

२—तत्रैव व्यासभाष्ये

३—१।३६ पातञ्जलयोगसूत्रे व्यासभाष्ये

४—तत्रैव

व्यासमहोदयानां मते ज्योतिष्मतीति पदं द्व्यर्थकम्। एका विशोका विषयवती ज्योतिष्मती प्रवृत्तिः द्वितीया च विशोका अस्मितामात्रा ज्योतिष्मती प्रवृत्तिरिति— 'एषा द्वयी विशोका विषयवती, अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते यया योगिनश्चित्तं स्थितिपदं लभत इति।'[1]

इत्थं द्रष्टृदृश्ययोः संयोग एव अस्मिता इति। तत्संयोगश्च योगशास्त्रानुसारं हेयहेतुः।[2] अस्य संयोगस्य नाशेनैव मनुष्यो निवृत्तिं प्राप्नोति अन्यथा क्लिश्यते। पञ्चशिखाचार्या अपि कथयन्ति यत् "तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः।"[3]

सांख्यसिद्धान्तानुयायिनः अस्मितायाः पर्यायरूपेण मोहं स्वीकुर्वन्ति। लिङ्गपुराणे उपनिबद्धमस्ति—

"अविद्यां तम इत्याहुरस्मितां मोह इत्यपि।
महामोह इति प्राज्ञा रागं योगपरायणाः॥
द्वेषं तामिस्र इत्याहुरन्धतामिस्र इत्यपि।
तथैवाभिनिवेशं च मिथ्याज्ञानं विवेकिनः॥"[4]

सांख्यसिद्धान्तानुयायिनां मते पञ्चक्लेशाः पञ्चविपर्यया इति। परन्तु योगशास्त्रानुयायिनः विपर्ययं चित्तवृत्तिं मन्यते। पञ्चविपर्ययाणां नाशेनैव साधकः मोक्षं प्राप्नोति, अतः विपर्ययाः साधकानां कृते हेयाः। सांख्यिकानां मते अष्टविभूतीनां साहचर्येण अस्मिताविपर्ययः अष्टविधः। वाचस्पतिमहोदया अत्र कथयन्ति—"देवा ह्यष्टविधमैश्वर्यमासाद्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते। सोऽयमस्मिता मोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः।"[5]

विपर्ययादीन् सिद्धिपथस्य विरोधिनं स्वीकुर्वन्तो वाचस्पतिमिश्राः कथयन्ति यत्—"अतः सिद्धिपरिपन्थित्वाद् अङ्कुश इवेति विपर्ययाशक्तितुष्टयो हेया इत्यर्थः"।[6]

युक्तिदीपिकाकारा अत्र कथयन्ति यत्—"मोहस्य च किम्? अष्टविधो भेद इति। च शब्दात्कार्यकरणसामर्थ्येऽष्टविधेऽणिमादावहमिति प्रत्ययः।"[7]

---

१—तत्रैव

२—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः"—तत्रैव २।१७

३—पातञ्जलयोगप्रदीपे, पृ० ३१५

४—लिङ्गपुराणे २/६/३२–३३

५—सांख्यकारिकायां ४८ कारिकायाः तत्त्वकौमुद्याम्

६—तत्रैव ५१ कारिकायाः तत्त्वकौमुद्याम्

७—तत्रैव ४८ कारिकायाः युक्तिदीपिकायाम्

सांख्याचार्याः डॉ०रामशङ्करभट्टाचार्याः सांख्यकारिकायाः ज्योतिष्मतीटीकायामस्मिता-विषये विवरणग्रन्थस्योद्धरणमुद्धरन्ति—"यस्मिन्नहंप्रत्यये चित्तपुरुषयोर्विवेको नोपलभ्यते सोऽयमहंप्रत्ययोऽस्मिताख्यः क्लेशः।"[१]

सांख्याचार्याः स्वीकुर्वन्ति यदयमस्मिताक्लेशः मूलरूपेण अध्यवसाये बुद्धौ वा निवसति। अयं क्लेश एव बुद्धिमशुद्धयति। योगशास्त्रानुसारं प्रमाणवृत्तिरपि एका चित्त-वृत्तिः, योगप्राप्त्यर्थञ्च यस्याः निरोधः आवश्यकः। प्रमाणवृत्तेः मूले इयमेवास्मिता निवसति, अतः अस्मितायाः निरोधः आवश्यकः मोक्षेच्छूनां कृते।

इत्थं योगशास्त्रे अस्मिताविषये विशदरूपेण वर्णनमस्ति। अस्मितायाः नाशेनैव साधकः समाधिं प्राप्नोति नान्यथा। श्रीमच्छङ्कराचार्या अप्यस्मितायाः पर्यायरूपेणाहङ्कारं स्वीकुर्वन्तः कथयन्ति यत् यावत्पर्यन्तं दुरात्मनाऽहङ्कारेण आत्मनः सम्बन्धः तिष्ठति तावत्पर्यन्तं मोक्षस्य नास्त्याशा—

"यावत्स्यात्स्वस्य सम्बन्धोऽहङ्कारेण दुरात्मना।
तावन्न लेशमात्रापि मुक्तिवार्ता विलक्षणा॥"[२]

श्रीमच्छङ्कराचार्या अग्रे कथयन्ति यदहङ्कारस्य पूर्णतया नाशेन, अहङ्कारोत्पन्न—विकल्पानां नाशेन च आत्मतत्त्वविवेकः प्राप्यते 'अहमस्मीति' तत्त्वबोधश्च भवति—

"अहमोऽत्यन्तनिवृत्त्या तत्कृतनानाविकल्पसंहृत्या।
प्रत्यक्तत्वविवेकादयमहमस्मीति विन्दते तत्त्वम्॥"[३]

अत्र शङ्कराचार्या अपि योगशास्त्रस्य मतं स्वीकुर्वन्तो दृश्यन्ते। योगसूत्रे कथितमस्ति यद्यदा योगी कैवल्यं प्राप्नोति तदा सः स्वकीयमात्मानं पूर्णतया परिचिनोति। तदा द्रष्टुः पुरुषस्य आत्मनः वा स्वरूपे अवस्थितिः भवति।[४]

तस्याः अस्मितायाः नाशेनैव साधकः कैवल्यं प्राप्नोति नान्यथा। मुण्डकोपनिषदि अपि प्रतिपादितमस्ति यच्चेतनरूपपुरुषस्य जडरूपचित्तस्य च विवेकपूर्णे साक्षात्कारे सति हृदयग्रन्थेः भेदनं भवति, सर्वसंशयाः क्षीयन्ते, सर्वाणि कर्माणि च विनश्यन्ति—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"[५]

---

१—तत्रैव ज्योतिष्मतीटीकायां, ३३१ पृष्ठे
२—विवेकचूडामणौ—३००
३—तत्रैव—३०५
४—"तदा द्रष्टुः स्वरूपेऽवस्थानम्।" योगसूत्रे—१।३
५—मुण्डकोपनिषदि—२।२।८

★

पूर्वतोऽनुवृत्तम्

# कुन्तापसूक्तानामाध्यात्मिकभाष्यम्

श्रीजगन्नाथो वेदालङ्कारः

अथ चतस्रः पारिक्षित्यः

राज्ञो विश्वजनीनस्य यो देवोऽमर्त्यां अति ।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥७॥

(यः देवः) य आदिदेवः परमेश्वरः ( अमर्त्यान् अति ) अमरान् सकलदेवान् अतीत्य वर्तते तस्य, यत्तदोर्नित्यसम्बन्धात् तस्येति पदमाक्षिप्यते, ( वैश्वानरस्य ) विश्वेषु सर्वेषु नरेषु मनुष्येषु देवेषु च विद्यमानस्य विराट्पुरुषस्य विश्वात्मनः ( विश्वजनीनस्य ) सर्वजनहितकरस्य ( परिक्षितः ) परि परितः सर्वतः क्षियति निवसति स्वयम्, निवासयति च सर्वभूतानि इति परिक्षित्, क्षिनिवासगत्योः इति तौदादिकाद् धातोः परिपूर्वात् क्विपि तुकि च परिक्षित् इति साधु । क्षियतेरत्र अन्तर्भावितण्यर्थत्वमपि विवक्षितम् । तथा सति परिक्षित् सर्वभूताधिवासः, सर्वेषां निवासप्रदाता चेति द्वावप्यर्थौ प्रसिद्ध्यतः । क्षियतेः गत्यर्थग्रहणाच्च परितः सर्वतः क्षियति अप्रतिहतगतिर्भवति गमयति च सर्वान् कर्माध्यक्षतया इत्यर्थोऽपि अवसीयते । तथा च 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' इति श्रुतेः ( श्वेता० ६.११ , कृत्स्नोऽप्यर्थः 'परिक्षित्'-पदेन समर्प्यते । तस्य तथाभूतस्य परिक्षितः ( राज्ञः ) राजराजेश्वरस्य कोटिकोटिब्रह्माण्डशासकस्य ( सुष्टुतिम् ) उत्तमां, सर्वाङ्गपूर्णां स्तुतिम् ( आ सुनोत ) समन्तात् मथ्नीत, तदीयसद्गुणसिन्धुं समवगाह्य स्तुतिसारं सम्प्रकाशयत ।

परिक्षिन्नः क्षेममकरोत् तम आसनमाचरन् ।
कुलायं कृण्वन् कौरव्यः पतिर्वदति जायया ॥८॥

( कौरव्यः ) करोति सर्वमिति कुरुः, कर्तुमकर्तुमन्यथाकर्तुं समर्थ ईश्वरः । करोतेः 'कृग्रोरुच्च' ( उणा० १.२४ ) इति कुप्रत्यये, ऋकारस्य उकारे रपरत्वे च साधुः । कुरुरेव कौरव्यः, स्वार्थे व्यश्छान्दसः । ( पतिः ) सर्वेषां पाता पालकश्च प्रभुः ( जायया कुलायं कृण्वन् ) निजभार्यया प्रकृतिरूपिण्या, तद्द्वारा विश्वकुटुम्बं करिष्यन्, रचयिष्यन्, करोतेः 'वर्तमानसामीप्ये वर्तमानवद् वा' (अष्टा० ३.३.१३१) इति लृटः स्थाने लट्, लटः शत्रादेशः,

व्यत्ययेन श्नुः। (तम आसनम् आचरन्) तमसः, षष्ठ्या लुक्, सृष्टेः पूर्ववर्तिनः तमसोऽन्धकारस्य आ समन्तात् असनं क्षेपणं, निरसनं कुर्वन् (वदति) जायां, निजशक्तिं प्रकृतिं ब्रवीति, शास्ति, आदिशति जगत्सर्जनार्थमिति शेषः। एवं च स (परिक्षित्) सर्वभूताधिवासः, जीवानां कर्माध्यक्षः, कर्मफलप्रदाता पूर्वमन्त्रोक्तः परमात्मा (नः) अस्माकं जीवानां (क्षेमं) कल्याणम् (अकरोत्) कृतवान्। जीवेभ्यः प्राक्तनकर्मानुसारम् आत्मविकाससाधनं नूतनजन्म प्रदाय तेषां मङ्गलमकरोदित्यर्थः। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्वेताश्वतरोपनिषदि (४.५) वर्णितौ 'अजा' 'अजोऽन्यः' च प्रकृतमन्त्रे 'जाया'–'पति'–शब्दाभ्यां कीर्तितौ इति अवबेयम्।

कतरत् त आ हराणि दधि मन्थं परिस्रुतम्।
जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः॥६॥

(परिक्षितः राज्ञः राष्ट्रे) सर्वभूताधिवासस्य, राजराजेश्वरस्य परमात्मनः राज्ये (जाया) तद्भार्या प्रकृतिः (पतिं) स्वपतिं परमेश्वरं (वि पृच्छति) सर्जनविषयकं विशेषं पृच्छति, वि इत्युपसर्गोऽत्र विशेष-वैविध्यवैचित्र्य-वाचकः, सर्जनाय सामान्यादेशं सम्प्राप्य प्रकृतिः तस्य विशेष-वैविध्यवैचित्र्य-विषये पृच्छां करोति इति भावः। (दधि) दधिवत् स्थूलं घनमन्नमयतत्त्वं, प्रस्तरखनिजधात्वादिकं जडपदार्थं, दधाति धारयति पोषयति चेति दधि धारकपोषकमन्नधान्यादिकं वा (मन्थं) मथितदधिवत् तक्रवद् वा वैद्युतप्राणशक्तिमयम् उद्भिज्जं वृक्षवनस्पत्यादिकम्, अन्नप्राणमयसत्तां वा (परिस्रुतम्) निर्जलतक्रस्यापि सारभूतं तत्त्वं परिस्रवणशीलं स्पन्दनस्वभावं नवनीतघृतरसात्मकम्; घृतं च शुद्धमानसदीप्तेः प्रतीकम् इति कृत्वा अन्नप्राणमनोमयीं सत्तां पशुपक्षिमनुष्यादिरूपामित्यर्थः, (कतरत्) दधिमन्थ-परिस्रुतेषु स्थूल-सूक्ष्म-सूक्ष्मतरेषु तत्त्वेषु कतमत् तत्त्वम्, 'शुद्धान्नमय'–'अन्नप्राणमय'–'अन्नप्राणमनोमय'सत्तासु कतमां सत्तां, तमःप्रधान-रजःप्रधान-सत्त्वप्रधानेषु पदार्थेषु प्राणिषु च कतमं पदार्थं प्राणिनं वा (ते आहराणि) तुभ्यमुपानयानि, सृजानि उत्पादयानि वा इति प्रकृतेः पृच्छा।

अत्रायमभिसन्धिः—लोहितशुक्लकृष्णा अजा, सत्त्वरजस्तमोरूप-त्रिगुणात्मिका तेजोऽबन्नलक्षणा वा प्रकृतिजाया स्वपतिं परमेश्वरमाख्याति सात्त्विक-राजस-तामसीः, अन्नमय-अन्नप्राणमय-अन्नप्राणमनोमयीः त्रिविधा अपि सृष्टीः कर्तुं क्षमाऽहं भवज्जाया किं किं सृजेयं भवते इति आदिशतु मां सर्वशक्तिमान् मदीश्वरः।

अभीव स्वः प्र जिहीते यवः पक्वः परो बिलम् ।
जनः स भद्रमेधते राष्ट्रे राज्ञः परिक्षितः ॥ १० ॥

( पक्वः ) हविर्दानाय अग्निना कृतपाकः शृतो वा ( यवः ) यवोऽत्र उपलक्षणं तण्डुलादीनां हविष्यान्नानाम् । 'पक्वः यवः' इत्याभ्यां पदाभ्यामत्र पुरोडाशो विवक्षितः । अन्तर्यज्ञे च सः [ पुरोडाशः ] तप्ततनोः प्रतीकम् । तपसा परिपूता, जीवनस्य अग्निज्वालानां, कष्टानामनुभवानां च सहनेन आत्मानं भगवतेऽर्पयितुं सिद्धा तनुरेवात्र मन्त्रवर्णैः 'पक्वः यवः' इत्युक्ता । सा ( बिलं ) विभक्तिव्यत्ययेन पञ्चम्याः सुः, सोरमादेशः, बिलात् गुहायाः, हृद्गुहायाः ( परः ) परतः, असङ्गतया हृदयात् पृथक्कृत्य भगवते अर्पिता ( स्वः अभि ) स्वर्गं लोकं प्रति ( प्र जिहीते इव ) प्रशस्ततया प्रवेगेन च गच्छति नूनम् । इवेति निपातोऽत्र नूनम् इत्यर्थकः । निपाताः 'उच्चावचेष्वर्थेषु निपतन्ति....अपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः' इति यास्कोक्तेः ( १-२-१ ), 'कर्मोपसंग्रहार्थाः अर्थात् अर्थोपसंग्रहार्थाः', अर्थविशेषस्योपसंग्रहार्थका इति तद्व्याख्यानात् । ( स जनः ) सोऽयं पक्वयवोपमदेहः तप्ततनुः साधकः ( परिक्षितः राज्ञः राष्ट्रे ) सर्वभूताधिवासस्य राजराजेश्वरस्य परमात्मनो राज्ये ( भद्रम् एधते ) भद्रं यथा स्यात्तथा सक्षेमं ससुखं च वर्धते, एधतेरन्तर्भावितण्यर्थत्वाङ्गीकाराच्च ( भद्रं ) सुखमानन्दं कल्याणं च ( एधते ) वर्धयति स्वस्य परेषां च इत्यर्थः ।

अथ चतस्रः कारव्याः

इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा जरन् ।
ममेदुग्रस्य चर्कृधि सर्व इत् ते पृणादरिः ॥ ११ ॥

( इन्द्रः ) दिव्य [ ईश्वरीय ] मनसो ज्योतिर्मयलोकस्य, शुद्धदिव्यप्रज्ञाया लोकस्य स्वर्नामकस्य अधिपतिर्देवः इन्द्रः ( कारुम् ) निजस्तोतारम् ( अबूबुधत् ) अजागरयत्, तस्य मनश्चेतनां प्राणचेतनायाः सीमाभ्यो बाधाभ्यश्च विमोच्य तां दिव्यज्योतिषा अपूरयदित्यर्थः । मनुष्यस्य मनोमयचेतनायाः प्राणिकबन्धनेभ्यो विमोचनं दिव्यप्रकाशेन तस्याः परिपूरणं चैव इन्द्रकृतं प्रबोधनम् । स्तोतारं तथा अन्तः प्रबोध्य सोऽन्तर्वाण्या समादिशत्—हे स्तोतः ! ( उत्तिष्ठ ) उद्यतः, सन्नद्धः भव । ( जरन् ) मम स्तुतिं कुर्वन्, जृस्तुतौ ( भ्वा. प. ) अन्यांश्च तामुपदिशन्, गॄशब्दे, क्र्यादि. प., व्यत्ययेन शप्, गकारस्य चुत्वं छान्दसम्, (विचर) व्यापकं लोकसंग्रहात्मकं कर्म आचर मत्प्रदत्तप्रकाशप्रेरितम्, विश्वकल्याणसाधकम् । ( उग्रस्य ) उद्गूर्णस्य प्रबलशक्तिशालिनः ( मम इत् ) ममैव ( चर्कृधि ) कर्म कुरु भृशं भूयो भूयश्च, स्वार्थप्रेरितमहङ्कारात्मकं कर्म परित्यज्य निःस्वार्थं निरहङ्कारं भगवत्कर्म समाचर । ( सर्वः इत् अरिः ) सर्वोऽपि, प्रत्येकमपि अरणशीलः, सत्यस्य विजयार्थं संग्रामशीलः

आर्यजनः ( ते पृणात् ) त्वां प्रीणयेत्, तर्पयेत् प्रसादयेच्च सत्यसंग्रामे विजयश्रिया यशोलक्ष्म्या चेति भावः ।

अस्मिन् मन्त्रे 'अरि'शब्दः आर्यवाचकः । तथा च महर्षिश्रीअरविन्दाः 'उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद् दुवः ॥' उत नः सुभगाँ अरि र्वोचेयु र्दस्म कृष्ट्यः । स्यामेदिन्द्रस्य शर्मणि ॥' ऋ० १.४.५-६ इत्यनयोर्ऋचोर्व्याख्यायामाहुः—

"प्रगतिं प्रयासं वा कुरुध्वम्" इत्यर्थकम् 'आरत'पदं स्वसजातीयैः 'अरि'–'अर्य'–'आर्य'–'अरत' 'अरणि'पदैस्तुल्यं वेदस्य केन्द्रीयविचारम् अभिव्यनक्ति । 'अर्'-धातुः ( ऋ गतौ इति ) सदा प्रयत्नस्य संघर्षस्य वा गतिं निर्दिशति, सर्वातिशायिन्या उच्चतायाः श्रेष्ठताया वाऽवस्थां सूचयति । अयं नौचालनम्, कर्षणम्, आयोधनम्, उद्यमनम्, आरोहणम् इत्येतेषु अर्थेषु प्रयुज्यते । तदेवम् आर्यो नाम स मनुष्यो यो वैदिककर्मणा अर्थात् देवयजनरूपेण आन्तरेण बाह्येन च कर्मणा 'अपसा' वा आत्मपूर्णतायै स्पृहयते । किन्तु इदं कर्म यात्रा, प्रयाणं, युद्धम्, ऊर्ध्वारोहणम् इत्येषां रूपकैरपि निरूपितं वेदे । आर्यपुरुषः शिखराणि आरोढुं प्रयतते, पुरोगमनम्, ऊर्ध्वारोहणम् इत्युभयरूपा खलु तस्य यात्रा प्रयाणं वा । तस्मिन् संघर्षं संग्रामं च विधाय स स्वपथं विरचयति । इदमेव तस्य आर्यत्वम् ।....

"अयमेव भावः शब्दप्रतिध्वनिद्वारा विचारशृङ्खलायाः संसूचनरूपां सूक्ष्मवैदिकशैलीम् अवलम्ब्य अग्रिममन्त्रस्य 'अरिः कृष्टयः' इति पदाभ्यां पुनरुपस्थाप्यते ।....'अरिः कृष्टयः नाम मानवस्य ऊर्ध्वारोहणसहायिकाः शक्तयः ।"

इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोऽपि पूषा नि षीदति ॥ १२ ॥

( इह ) अस्मिन् कारौ स्तोतरि वा ( गावः ) हे चिद्रश्मयः, ज्ञानार्चिषः ! ( प्रजायध्वम् ) यूयं वर्द्धध्वम्, ( इह ) अस्मिन् ( अश्वाः ) हे प्राणशक्तयः ! वर्धध्वम् । ( इह ) अस्मिन् ( पूरुषाः ) पुरि शयानस्य पुरुषस्यात्मनः शक्तयः ! वर्धध्वम् । ( इह उ ) अस्मिँश्च ( सहस्रदक्षिणः ) भूरिदक्षिणः, भूरिदाः, बहिरन्तरैश्वर्यस्य प्राचुर्येण प्रदाता, भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । भूरि घेदिन्द्र दित्ससि । 'भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन्' इत्यादिमन्त्रेषु इन्द्रस्य भूरिदात्वप्रसिद्धेः ।' ( पूषा अपि ) बाह्यान्तरवैभवानां पुष्कलप्रदानेन अस्माकं पोषयिता वर्धयिता इन्द्रः अपि ( नि षीदति ) निषीदतु, विराजतु अस्य अन्तरे निकामं निरन्तरञ्च । 'नि' इत्युपसर्गोऽत्र निरन्तरं निकामञ्च अन्तर्निवेशमाह गभीरेऽन्तस्तले ।

मेमा इन्द्र गावो रिषन् मो आसां गोपती रिषत् ।
मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥१३॥

( इन्द्र ) हे दिव्यज्योतिष्प्रदातः स्वर्पते ! ( इमा गावः ) त्वत्प्रदत्ता इमे दिव्यज्ञान-रश्मयः ( मा रिशन् ) हीनाः क्षीणा वा न भवेयुः । ( आसां गोपतिः उ ) एतासां प्रकाश—धेनूनां स्वामी त्वत्स्तोता अपि ( मा रिषत् ) क्षतिं, हानिं हिंसां वा न प्राप्नोतु । ( इन्द्र ) हे इन्द्र ! ( आसाम् अमित्रयुः जनः ) एतासां पूर्वोक्तप्रकाशगवाम् अहितकामः अमित्रता-कामी, अमित्रवत् अनिष्टकर्ता जनः, देवविरोधिनी प्रकाशद्वेषिणी वा सत्ता शक्तिर्वा ( मा ईशत ) आसां शासनं मा करोतु । ( स्तेनः मा ईशत ) प्रकाशविरोधी पणिर्दस्युर्वा इमा मा ईष्टाम्, अपहर्तुम् आत्मसात् कर्तुं वा मा क्षमताम् ।

इन्द्रसहकृतैः अग्नीषोमादिदेवैः वृजिनस्य रिपोः, स्तेनस्य, वृकस्य पणेर्वधेन तच्चोरित-ज्योतिर्गवां पुनः प्राप्तिविषये इमे मन्त्रा द्रष्टव्याः --

अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम् ।
दविष्ठमस्य सत्पते कृधी सुगम् ॥

... जही न्यत्रिणं पणिं वृको हि षः ॥ ऋ० ६.५१.१३-१४

अयं देवः सहसा जायमान इन्द्रेण युजा पणिमस्तभायत् । ऋ० ६.४४.२२

या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ।
सरस्वति देवनिदो निबर्हय ॥ ऋ० ६.६१.१, ३

अग्नीषोमा चेति तद् वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।
अवातिरतं बृसयस्य शेषः अविन्दतं ज्योतिरेकं बहुभ्यः ॥ ऋ० १.९३.४

उप नरं नोनुमसि सूक्तेन वचसा वयं भद्रेण वचसा वयम् ।
वनादधिध्वनो गिरो न रिष्येम कदाचन ॥१४॥

( वयं सूक्तेन वचसा ) वयं स्तोतारो वैदिकसूक्तात्मकवाण्या ( नरम् उप नोनुमसि ) देवं नरोत्तमम्, पुरुषोत्तमम्, वेदे 'नर'शब्दो देवानां कृते बहुशः प्रयुक्तः, तद्यथा—

'तद् वां नरावश्विना पश्वइष्टी' ( ऋ० १.१८०.४ )
'ऋषिं नरावंहसा पाञ्चजन्यम्' ( १.११७.३ )
'तद् वां नरा शंस्यं पज्रियेण' ( १.११७.६ )

'हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः' ( ऋ० ५.५७.८ ) इत्यादि-मन्त्रेषु अश्विनोः मरुतां कृते च 'नर'शब्दो व्यवहृतः । तं नरोत्तमम् उप आदरेण, घनिष्ठ-

तयाऽन्तरङ्गतया च, पौनःपुन्येन भृशं च नुमः स्तुमः। ( वयं भद्रेण वचसा ) वयं कल्याणकारिणा, आनन्दमयेन वेदवाक्येन, मन्त्रवर्णैः 'नरम् उप नोनुमसि' इति पुनरन्वीयते। स नरोत्तमो नः ( अधिध्वनः गिरः ) हृदयादधि ध्वन्यमाना वाणीः, हृदा तष्टान् मन्त्रान् ( वनात् ) जुषेत, प्रीतिपूर्वकं सेवेत। वन-षणसंभजने इत्यतो लेटि, तिपि, आडागमे इकारलोपे च रूपम्। ( कदाचन न रिष्येम ) वयं कदापि हिंसिताः पीडिता वा न भवेम, हीना दीना दूना वा न भवेम तस्य नरोत्तमस्य प्रसादात् इति शेषः।

अस्य सूक्तस्य प्रथममन्त्रेऽस्मिन्नन्तिममन्त्रे च 'नर'शब्दस्य पुरुषोत्तमवाचकस्य प्रयोगात् उपक्रमोपसंहाराभ्यां तात्पर्यनिर्णयलिङ्गाभ्यामिदं सूक्तं पुरुषोत्तमपरतया पर्यवस्यति।



# भारतीयविविधयोगसम्प्रदायप्रसङ्गः

डॉ० शिवशंकर अवस्थी

योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं नतोऽस्म्यहम् ॥ (भागवतम् )

( १ ) जगति योगाविर्भावस्येतिहास :

सृष्टेरादौ ब्रह्मणा हिरण्यगर्भेण[1] नारायणाख्येन[2] एक एवाव्ययो योगः सनकादीन् प्रति प्रथमं, तदनु विवस्वन्तं प्रति उक्तोऽभूत् । समाहितासमाहितान्तःकरणतया अधिकारिभेदादसौ योगः ब्रह्मनिष्ठतैकफलः द्विशाखतां गतः । एकः ब्रह्मयोगोऽपरः कर्मयोग इति । शुद्धान्तःकरणतया सनकादयः[3] ब्रह्मयोगपरायणाः[4] निवृत्तिमार्गिणो बभूवुः । सा च परम्परा सनकसनन्दनसनातनकपिलासुरिबोढुपञ्चशिखादीनां[5] नारदशुकप्रभृतीनां च । एषु अयं ब्रह्मयोगः, सांख्ययोग इति, ज्ञानयोगः अध्यात्मयोग इति चापरनामधेयैः सुप्रथां गतः । एष पन्थाः श्रमणमार्गाख्ययापि[6] प्रसिद्धः । गते च बहुतिथे काले गौतमो बुद्धः सांख्यगुरूणां

१—(क) हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ( योगियाज्ञवल्क्ये )
(ख) इदं हि योगेश्वरयोगनैपुणं हिरण्यगर्भो भगवान् जगाद यत् । ( श्रीमद्भागवतम् ५।१६।१३ )

२—(क) नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः (३ विष्णुपुराणम्) (प० अंशः अ० ३)
(ख) आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ।
यमाहुः पुरुषं हंसं प्रधानं परितः स्थितम् ॥
हिरण्यगर्भं कपिलं धन्यो मूर्ति सनातनम् । ( कूर्मपुराणम्–४।३८-३६ )

३—सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ॥
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः ( महाभारतम् ) गौडपाद–सां० का० टीका

४ –(क) वाह्यस्पर्शेष्वसंक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ ( गीतायाम् ५।२१ )
(ख) सनन्दनादयो ये तु ब्रह्मभावनया युताः । ( विष्णु पु० ६ अं० ७ अ० )

५—पितृतर्पणपद्धतावेषा परम्परा प्रसिद्धा

६—वातरशना वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुः ॥ ( तै० आ० २।७ )
श्रमणशब्दः शतपथब्राह्मणे १४।७।१।२२।

सकाशादधीतविद्यः पुनरेनमेव श्रमणमार्गं नवीनरूपेण प्रवर्तयामास ।

अपरा च परम्परा वैवस्वती । विवस्वान् मनवे, मनुः इक्ष्वाकवे, इक्ष्वाकुश्च प्रजाभ्यः राजर्षिभ्यः । तथा हि—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।

अस्याः परम्परायाः छान्दोग्योपनिषदि अपि उल्लेखः सुलभः । 'तद् ह एतत् ब्रह्मा प्रजापतये, प्रजापतिर्मनवे मनुः प्रजाभ्यः ।'— ( छान्दोग्य ३।११।४ ) अत्र शंकराचार्यः— 'ब्रह्मा हिरण्यगर्भो विराजे प्रजापतये उवाच । सोऽपि, मनवे । मनुरिक्ष्वाक्वादिभ्यः प्रजाभ्यः प्रोवाच ।

किं च—

'ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये काश्यपाय उवाच । असावपि मनवे स्वपुत्राय । मनुः[१] प्रजाभ्यः ।' छान्दोग्योपनिषद्भाष्यम् ( ८।१५।१ )

व्युत्थितान्तःकरणत्वात् तथाधिकारिणां लोकशासनं विदधानानां सृष्टिचक्रप्रवर्तनपराणां राजर्षीणां मन्वादीनामाहिताग्नीनाञ्चान्येषामियं कर्मयोगपरम्पराऽभ्यर्हिताऽभूत् ।

अन्ये च कात्यायनगौतमगार्ग्यवात्स्यायनप्रभृतयः[२] [३]जैगीषव्यासितदेवलकेशिध्वजखाण्डिक्यजनकादयोऽपरे च भार्गवोलूकवाल्मीकिहारीतवाद्धलिकैरातपौरिकर्षभेश्वरपञ्चाधिकरणपतञ्जलि-वार्षगण्यकौण्डिन्यमूकादयः, इतरे च भृगुवशिष्ठकरालजनकपराशरयाज्ञवल्क्यादयश्च तमेकमेव योगमधिगम्य यथाकाले आहिताग्नयः यथावसरे चाभिजातान्तःकरणप्रवृत्तिमाकलय्य प्रव्रजिता बभूवुः ।

---

(१) एषा परम्परा सांख्यकारिकायां युक्तिदीपिकायामपि यथा—
'यतश्च नारायणमनुजनकवशिष्ठद्वैपायनप्रभृतिभिराचार्यैः प्रधानपुरुषादयः पदार्थाः परिगृहीताश्चोपदिष्टाश्च प्रशस्ताश्च......कारिका ७१'

(२) महाभारतम् , शान्तिपर्व ।

(३) एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् । कश्यपः पुत्रकामस्तु चचार सुमहत्तपः ॥
तस्यैवं तपतोऽत्यर्थं प्रादुर्भूतौ सुताविमौ । वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ॥
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत । नाम्ना वै देवलः पुत्रो योगाचार्यो महातपाः ।
( कूर्मपुराणम् अ० १९।१,२,५ ) ।

( २ ) एकस्यैवाव्यययोगस्य स्वरूपम्

'योगः कर्मसु कौशलम्' इति मूलसूत्रं गीतासूपनिषत्सु सूत्रितम्। कौशलेन क्रियमाणं कर्म नहि लोकं पुण्यापुण्यैर्निबध्नाति। किं तत्कौशलम्? तदाह—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥ ३। ९॥

यज्ञार्थमेव कर्म करणीयम्। यज्ञो हि विष्णुः परमात्मा। विश्वरूपाय परमात्मने आत्मदानपूर्वकं क्रियमाणेन नियतकर्मणा नहि बद्धो भवति पुण्यापुण्यैर्जनः। कर्मणां फलं तु भवत्येव किन्तु तद्धि लोकसंग्रहार्थैव प्रभवति। "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा, करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥" इति नीत्या अवशिष्टं च तत्फलं वस्तुतोऽकर्तुः कर्तुः पक्षे पतति। तच्च यज्ञशिष्टाशनं प्रतिगृह्णन्नसौ सर्वकिल्विषैः मुच्यते।

अयमेवार्थः "ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति, इति देवीमाहात्म्यकीलकस्तोत्रे सुनिपुणं प्रतिपादितः। एष एव उत्कीलनमन्त्रः। दानप्रतिग्रहरूपया यज्ञात्मिक्या कुञ्चिकया विविधसुखदुःखरागद्वेषमानामानसामग्रीसंचीयमानवेश्मनि संसारयन्त्रभवने प्रविश्य, तदाहिण्डनतद्भ्रमणादिकमाचरन्नपि वस्तुतो नैव कुर्वन्न कारयन्, तत्र वर्तमानः निष्कामन् वा समग्रं कर्म प्रविलापयन् परं पूरुषमुपैत्येव युक्तो जनः।

माध्यन्दिनसंहितायामपि अर्थोऽयमुपस्थापितः यथा—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥
कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥

कस्य स्विद्धनमित्यासक्तेर्निरासः, मा गृधः इति कामसङ्कल्पवर्जनम्। विश्वात्मन परमेश्वरे सर्वस्वार्पणपूर्वकमुपभोग इति—तेन त्यक्तेन भुञ्जीथाः इत्येतेन विवृतम्। त्रिषु लोकेषु यत्किञ्चिज्जडं जङ्गमं वा सर्वं परमेश्वर एवेति ज्ञात्वा शतं वर्षाणि यावत् कर्माणि कुर्यादेव। एवंविधानेन पुण्यापुण्यैर्न बद्धो भवति नरः। कर्मशब्देनेह पुण्यापुण्ययोर्ग्रहणम् तदभावो मोक्षः। तदुक्तं गीतासु—

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः॥

समारम्यन्त इति समारम्भाः व्यापाराः । काम्यत इति कामः फलम् । तत्संकल्परहिताः ब्रह्मज्ञानाग्निदग्धकर्माणः । अनित्येभ्यः फलेभ्यः व्यावृत्तचेताः नित्येन परमात्मना तृप्तः । फलसाधनभूत आश्रयो यस्य न विद्यते स कुर्वन्नपि न करोति फलानुषङ्गाभावात् ।

अयमभिसन्धिः—लौकिकानां वैदिकानां च कर्मणां नाहं कर्ता, गुणा गुणेषु केवलं वर्तन्ते । ईश्वरायैव राज्ञ इव भृत्यः कर्माणि करोमीति । अध्यात्मचेतसा–ब्रह्मैवेदं सर्वमिति धिया ब्रह्मार्पणन्यायेन वा परमेश्वरे ब्रह्मणि सर्वकर्मणां सम्यगर्पणं विधाय निराशीः फलप्रार्थनारहितः निर्ममश्च भूत्वा विगतसन्तापः सन् कर्माणि कुर्यात् । सर्वासु क्रियासु कारकेषु च ब्रह्माभिगतं पश्यन् स्वयं ब्रह्मास्मीति भावितात्मा, ब्रह्मात्मकं ब्रह्मणे ब्रह्मणि च कर्म ब्रह्मकर्म तदेव समाधिर्योगस्तेन ब्रह्मैव गम्यते–इत्ययं सनातनो योगः समुपदिष्टः । तदाह—

मयि सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥
ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥
तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥

( ३ ) सनातनस्याव्ययोगस्य पक्षद्वयम्

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥ इति

धर्मसंहितायां हारीतः । अस्मिन् योगे ज्ञानांशः कर्मांशश्चेति पक्षद्वयम् । ज्ञानांशः साङ्ख्ययोगाख्यया कर्मांशश्च कर्मयोगसंज्ञया प्रसिद्धिं गतः । भक्तिः श्रद्धा, आदरो वा उभयत्र संयुज्यते, विशेषतः कर्मयोगे । परमेश्वराराधनाय कर्मणः भक्तिं विनानुपपत्तेः । एतेन भक्तिसम्प्रदायः परवर्तीतिवादिनः ज्ञानलवलाम्पट्यलुलितबुद्धयः प्रत्युक्ताः ।

यद्यपि एतस्मिन् योगे भागकल्पना नोचिता तथापि "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥– इति नीत्या ये आत्मस्मृतिं लब्ध्वा संसारं सर्वथा विस्मरन्ति ते निवृत्तिमार्गिणः सांख्ययोगिनः । ये च तादृशीमेवात्मस्मृतिं समधिगम्यानुनवत्फलासङ्गरहितं लोकसंग्रहार्थं कर्म कुर्वन्ति ते कर्मयोगिनः प्रवृत्तिपन्थानमध्यासिताः । द्वावपि पन्थानौ मोक्षमधिगमयत इति ध्येयम् । तथा हि महाभारते–

द्वाविमावथ पन्थानौ यस्मिन्वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभाषिता ॥

( शान्तिपर्व २४१।६ )

अयमर्थः विष्णुपुराणे केशिध्वजखाण्डिक्यसंवादे इत्थं प्रपञ्चितः —

बोधाधिकारयुक्तेषु हिरण्यगर्भादिषु ब्रह्मकर्मात्मिका उभयरूपा भावना विद्यते । सनन्दनादयः केवलं ब्रह्मभावनया युक्ताः, देवाद्याः, स्थावरा जङ्गमाश्च कर्मभावनासमन्विताः सन्ति । इत्थं त्रिविधा भावना । तथा हि–

त्रिविधा भावना भूप विश्वमेतन्निबोधताम् ।
ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥
कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥
सनन्दनादयो ये तु ब्रह्मभावनया युताः ।
कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥

४८–५१। (अंशः ६, अ० ७)

अत्र ब्रह्मकर्मात्मिका या भावना सैव पूर्वोक्तः सनातनो योगः हिरण्यगर्भेण लोकानां हितकाम्यया प्रवर्तितः । कर्मभावना च सामान्यकर्मपरा, नेयं हि कर्मयोगः, स्थावरेषु अन्तः–संज्ञेषु असंज्ञभेदभिन्नेषु, चरेषु च स्वभावतो बुद्धिपूर्वकं कर्मयोगानुपपत्तेः । किञ्च—

केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः ।
बुभुजे विषयान् कर्म चक्रे चानभिसंहितम् ॥ १०५ ॥

"अनभिसंहितं कर्म चक्रे" अमुना ग्रन्थेन कर्मयोगः समुपदर्शितः । वस्तुतस्तु कर्मयोगः ब्रह्मयोगश्च पूर्वोक्तनीत्या एकस्यैव योगस्य पक्षद्वयं न तु योगद्वयमिति ध्येयम् ।

(४) साधनभूता अन्ये योगा

अयं सनातनोऽग्र्यो योगो न सुलभः । यतो हि–

पराञ्चि खानि व्यतृणत्स्वयम्भूः,
तस्मात्पराङ्पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदा–
वृत्तचक्षुरमृतत्वमश्नन् ॥ कठोपनिषद् ॥

सर्वो हि जनः स्वभावतः वहिर्मुखः जगति जायते । तेषां विरल एव कश्चन योगी, अमृतत्वकामनया अन्तर्मुखः सन् प्रत्यगात्मानं पश्यति । अतोऽस्य योगस्यापलब्धये साधनभूता

अन्ये योगाः क्रमेण प्राचलन्। तेषु महामतिपतञ्जलिनाऽनुशासिते दर्शने, अष्टाङ्गयोगः, तपोयोगः, स्वाध्याययोगः ईश्वरप्रणिधानयोगश्च सूपदिष्टाः। तपसा हठयोगस्य, स्वाध्यायेन मन्त्रयोगस्य, ईश्वरप्रणिधानेन भक्तियोगस्य चाभ्युपगमस्तत्र जातः। यथा गीतासूपनिपत्सु "तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्" इत्यनेन वियोग एव योगत्वेनोपदिष्टः। तथेहापि—

पतञ्जलिमुनेरुक्तिः काप्यपूर्वा जयत्यसौ।
पुम्प्रकृत्योर्वियोगोऽपि योग इत्युदितो यया ॥ इति

भोजराजवचसा वियोग एव योग उक्तः। अतएव च योगः समाधिरिति भोजवृत्तिः, "युज् समाधौ" इत्यस्माद् व्युत्पन्नः समाध्यर्थो न तु "युजिर् योगे" इत्यस्मात् संयोगार्थ इति तत्त्ववैशारदी च संगच्छेते।

वियोगस्येदमेवाकूतम्–स्वरूपेऽवस्थानं स्वरूपप्रतिष्ठा वा चितिशक्तेरित्येव योगफलम्। स्वरूपावरकाणि यानि विकारजातानि अविद्यादीनि, तेषाञ्चाधारभूतं यच्चित्तं व्यष्टिप्रकृतिर्वा तस्याः विप्रलये आत्मकल्पावस्थाने वा शुद्धः चिन्मात्रः केवल आत्मा समुदेति। आत्मकल्पावस्थान च चित्तसत्त्वस्य शुद्धावेव जायते। अत उक्तम्—"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्" इति। शुद्धौ सति साम्यमैक्यमित्याशयः।

(५) अस्पर्शयोगः

गौडपादाचार्यैः यश्च—

अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥

( गौ० का० ३।३९ )

इति कारिकया सूचितः सोऽपि वियोगरूप एव। अस्य चास्पर्शयोगस्य स्वरूपमित्थमुपन्यस्तं तत्र—

सर्वाभिलाषविगतः सर्वचिन्तासमुत्थितः।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥

सम्पूर्णशब्दस्मृतिविगमे, सर्वविचारातीते "स्पर्शान् कृत्वा बहिर्वाह्यान्" इति नीत्या सर्वविषयवियोगे सति मनसोऽमनीभावे प्रशान्तकल्लोलोदधिप्रख्यः निखिलाज्ञानतमोध्वंसिप्रभाभास्वरः सुषुम्नायां समीकृते प्राणापानवाहे हाटकस्तम्भ इव निमेषोन्मेषवर्जितः निर्वातनिष्कम्पदीपशिखाकारः निखिलद्वैतप्रत्यनीकः, अतएव अभयः येन योगी भवति सोऽयं समाधिरस्पर्शयोग इति। अयं च नासम्प्रज्ञाताख्यसमाधेरन्यः।

(६) शब्दपूर्वयोगः—

अस्मिन् लोके द्वौ शब्दात्मानौ–एकः नित्यः अन्यश्च कार्यरूपोऽनित्यः। यः शब्दः श्रूयते उच्चार्यते वा स लोकव्यवहाराय प्रवृत्तः वैखरीरूपः कार्योऽनित्यः। परावागात्मनः शब्दब्रह्मणः बिम्बस्य वर्णपदवाक्यमयोऽयं कार्यरूपः प्रतिबिम्बवद् भासते। नित्यस्तु परावागात्मा परपश्यन्तीरूपो वा सर्वस्य साध्यसाधनरूपस्य पदपदार्थभेदव्यवहारस्य च योनिरुपादान-कारणम्। संहृतककार-खकारादिक्रमः, सर्वस्य चराचरस्यात्मरूपतयाऽन्तः सन्निविष्टः, सर्वेषां जन्मादिविकाराणां प्रभवः, कर्मणामाश्रयः। सुखदुःखयोरधिष्ठानं, सर्वत्रापि अप्रतिहतकार्य-शक्तिरपि घटादिनिरुद्धप्रकाश इव भोगायतनशरीरमात्रप्रकाशकः सर्वमूर्तीनां–वर्णानां, पदानां, वाक्यानां पदार्थानां चाक्षय्यप्रकृतिः, पर्जन्यवद् दावाग्निवच्च प्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिः महान् शब्दवृषभः शब्दानामुच्चारयितुर्जनस्य हृदि तिष्ठति। वाग्योगविदः तेनैव सायुज्यं कामयन्ते। तदाह-

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥

१३०॥ (वाक्यपदीयम् का० १)

अस्य शब्दब्रह्मापरपर्यायस्य परब्रह्मणः उपलब्धये शब्दपूर्वयोगः व्याकरणागमे प्रसिद्धः। शब्दपूर्वयोगमेव युञ्जानो योगी–यथा लिपिचिह्नानि अक्षरस्मृतेः निमित्तानि तथैव यस्मिन् प्रकाशे नित्यस्य शब्दस्य निमित्तभूता अभिव्यञ्जिकाः वैखर्यादीः तिस्रः वाचः प्रतिबिम्बवत् पश्यति। तथा हि—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्॥

॥२०॥ (वा० प०, १ काण्डम्)

अयं योगः क्रमसंहारेणैव लभ्यते। तदाह—"शब्दस्वरूपस्यात्मनाभेदतत्त्वज्ञः क्रम-संहारेण शब्दपूर्वं योगं लभते।" साधुप्रयोगाच्चाभिव्यक्तधर्मविशेषः, अहमेव महान् शब्दा-त्मेति भावयन् प्रत्याहृतबाह्यकरणवृत्तिवैखरीशब्दो जनः वैकरण्यं लभते इत्येकः क्रमः। तदनन्तरं अनपभ्रंशामनृतादिभिरसंकीर्णां सूक्ष्मप्राणमात्रवृत्तिमध्यमाख्यां वाचमधिगम्य वाग्विकाराणां वैखर्यादीनां प्रकृतिं प्रतिभामनुपरैति अपरपश्यन्तीं बुद्धिस्थामिति द्वितीयः क्रमः। तस्माच्च सत्तानुगुण्यमात्रात्–सत्तासामानाधिकरणमात्रात् प्रतिभाख्यात् शब्दपूर्वयोग-भावनाभ्यासाद्वेगात् प्रत्यस्तमितसर्वविकारोल्लेखमात्रां परपश्यन्तीं लोकव्यवहारातीतां परां प्रकृतिं प्रतिपद्यते। अन्यच्चाह भगवान् भर्तृहरिः स्वोपज्ञे-व्यवस्थितसाधुभावेन हि रूपेण संस्क्रियमाणे शब्दतत्त्वे, अपभ्रंशोपघातापगमादाविर्भूते धर्मविशेषे नियतोऽभ्युदयः।

तदभ्यासाच्च शब्दपूर्वकं योगमधिगम्य प्रतिभां तत्त्वप्रभवां भावविकारप्रकृतिं सत्तां साध्यसाधनशक्तियुतां सम्यगवबुध्य नियता क्षेमप्राप्तिरिति। प्रणवजपपूर्वकं तेजोवलयध्यानमेव शब्दपूर्वो योग इति वयम्।

(७) राजयोगः

"राजविद्या राजगुह्यमिति" गीतासूपनिषत्सु योगस्यास्य सूचना लभ्यते। वस्तुतोऽष्टाङ्गयोग एव राजयोग इति तत्र तत्र निर्देशः। यमादीनि चत्वारि हठयोगस्याङ्गानि तथा प्रत्याहारतो समाध्यन्तानि चत्वारि राजयोगस्येति हठयोगो राजयोगस्य साधनम्। अत आह–केवलं राजयोगाय हठविद्योपदिश्यते। (हठयोगप्रदीपिका) राजयोगस्य षोडशाङ्गानि भवन्ति तथा हि—

कलाषोडशकोपेतराजयोगस्य षोडश।
सप्त चाङ्गानि विद्यन्ते सप्तज्ञानानुसारतः॥
विचारमुख्यं तज्ज्ञेयं साधनं वहु तस्य च।
धारणाङ्गे द्विधा ज्ञेये ब्रह्मप्रकृतिभेदतः॥
ध्यानस्य त्रीणि चाङ्गानि विदुः पूर्वे महर्षयः।
ब्रह्मध्यानं विराड्ध्यानं चेशध्यानं यथाक्रमम्॥
ब्रह्मध्याने समाप्यन्ते ध्यानान्यन्यानि निश्चितम्।
चत्वार्यङ्गानि जायन्ते समाधेरिति योगिनः॥
सविचारं द्विधा भूतं निर्विचारं तथा पुनः।
इत्थं ससाधनं राजयोगस्याङ्गानि षोडश॥

(राजयोगसंहिता)

(८) हठयोगः

तपसा हठयोगस्य सूचना पातञ्जले दर्शने प्राप्यते। किञ्च—"ततः क्षीयते प्रकाशावरणम्" (योगसू० पा० २सू० ५२) इति सूत्रभाष्ये–"तपो न परं प्राणायामात् ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य" इति पञ्चशिखाचार्यप्रमाणात् प्राणायामः परमं तप इति ज्ञायते। हठयोगे प्राणायाम आधारभूतस्तथा हि—

हठिनामधिकस्त्वेकः प्राणायामपरिश्रमः।
प्राणायामे मनःस्थैर्यं स तु कस्य न सम्मतः॥

किञ्च—

हकारः कीर्तितः सूर्यष्ठकारश्चन्द्र उच्यते।
सूर्याचन्द्रमसो योगाद्धठयोगो निगद्यते॥

सूर्येण पिंगला नाड़ी प्राणवायुश्च सूचितः, चन्द्रेण इडाऽपानवायुश्च, तयोर्योग एव हठयोगः। अयं हठयोगः पूर्वं मार्कण्डेयेनानन्तरं मत्स्येन्द्रनाथगोरक्षादिभिः स्वीकृत आसीत्। यथा—

द्विधा हठः स्यादेकस्तु गोरक्षादिसुसाधकैः।
अन्यो मृकण्डुपुत्राद्यैः साधितो हठसंज्ञकः॥

हठयोगस्य सप्ताङ्गानि प्रसिद्धानि तथा हि—

षट्कर्मासनमुद्राः प्रत्याहारश्च प्राणसंयामः।
ध्यानसमाधी सप्ताङ्गानि स्युर्हठस्य योगस्य॥

स्थूलशरीरस्य शोधनार्थं दृढतायै च हठयोगे धौतिवस्तिनेत्यादीनि षट्कर्माणि, पद्मसिद्धादीन्यासनादि, खेचर्यादयो मुद्राः प्राणायामश्च विशेषत उपदिश्यन्ते। अयं हठयोगः राजयोगस्य सोपानभूत इति प्राक्प्रतिपादितम्।

(९) लययोग :

अयं योगः नादयोगशब्देनाप्युच्यते। दक्षिणे कर्णेऽनाहतं नादं श्रृणोति साधकः। अभ्यासे कृते सति क्रमशः घण्टादीनां दशविधो नादः श्रूयते। चरमे ओंकारनादः तत्रैव मनसो लयः कार्यः तदानीमेव स्वरूपस्थितिः।

सिद्धासने स्थितो योगी मुद्रां सन्धाय वैष्णवीम्।
श्रृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं सदा॥

(नादविन्दूपनिषद्)

इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः।
मारुतस्य लयो नाथः स लयो नादमाश्रितः॥

(हठयोगप्रदीपिका ४।२९)

अभ्यस्यमानो नादोऽयं वाह्यमावृणुते ध्वनिम्।
पश्चाद्विक्षेपमखिलं जित्वा योगी सुखी भवेत्॥
कर्पूरमनले यद्वत् सैन्धवं सलिले यथा।
तथा सन्धीयमानं च मनस्तत्त्वे विलीयते॥

(ह० प्र० ४।८३,५९)

केचन एनमेव योगमित्थमनुसन्दधते—

देहे मेरुदण्डस्याधस्तादेकः कन्दोऽस्ति मूलाधारनाम्ना प्रसिद्धः। द्वाविंशतिसहस्राणि नाड्यस्ततो निष्क्रम्य निखिले शरीरे व्याप्नुवन्ति। तासु तिस्रः नाड्य इडापिंगलासुषुम्नाख्याः मुख्याः। मेरुदण्डस्य वामभागे चन्द्ररूपिण्या इडायाः, दक्षिणभागे च सूर्यरूपिण्याः पिंगलायाः,

मध्ये च सुषुम्नायाः पन्था अस्ति । भ्रूमध्ये संगता भूत्वा एताः शिरसि ब्रह्मरन्ध्रं यावत्प्रयान्ति । मूलाधारतो ब्रह्मरन्ध्रपर्यन्तं नाडीग्रन्थिरूपाणि षट्चक्राणि सन्ति । मूलाधारे महाशक्तिः कुलकुण्डलिनी शेते । ध्यानेन जपेन च तां सम्बोध्य पार्यन्तिके सहस्रारचक्रे समासीने परमेश्वरे तस्याः लयः कार्य इत्ययं लययोगः कुण्डलिनीयोगो वेति ज्ञेयः ।

लयक्रियासाधनेन सुप्ता सा कुलकुण्डली ।
प्रबुद्ध्य तस्मिन्पुरुषे लीयते नात्र संशयः ।
शवत्वमाप्नोति तया साहाय्यादस्य साधकः ।

(१०) मन्त्रयोगः भक्तियोगश्च

क्रियायोगसूत्रभाष्ये "स्वाध्यायः प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा" इत्युक्तम् । प्रणवपूर्वाणां मन्त्राणां जप इति भोजराजाः । प्रणवादयः पुरुषसूक्त-रुद्रमण्डल-ब्राह्मणादयो वैदिकाः । पौराणिकाश्च ब्रह्मपारायणादय इति वाचस्पतिमिश्रा आहुः । किञ्च-

मातृकादियुतं मन्त्रं द्वादशाब्दं तु यो जपेत् ।
क्रमेण लभते ज्ञानमणिमादिगुणान्वितम् ॥

( योगतत्त्वोपनिषद् )

अन्यच्च-

नामरूपात्मिका सृष्टिर्यस्मात्तदवलम्बनात् ।
बन्धनान्मुच्यमानोऽयं मुक्तिमाप्नोति साधकः ॥
तामेव भूमिमालम्ब्य स्खलनं यत्र जायते ।
उत्तिष्ठति जनः सर्वोऽध्यक्षेणैतत्समीक्ष्यते ॥
भवन्ति मन्त्रयोगस्य षोडशाङ्गानि निश्चितम् ।
यथा सुधांशोर्जायन्ते कलाः षोडश शोभनाः ॥
भक्तिः शुद्धिश्चासनं च पञ्चाङ्गस्यापि सेवनम् ।
आचारधारणे दिव्यदेशसेवनमित्यपि ॥
प्राणक्रिया तथा मुद्रा तर्पणं हवनं बलिः ।
यागो जपस्तथा ध्यानं समाधिश्चेति षोडश ॥

( मन्त्रयोगसंहिता )

भक्तियोगः पातञ्जले ईश्वरप्रणिधानपदेनोक्तः "ईश्वरप्रणिधानं च, सर्वक्रियाणां परमगुरावर्पणं तत्फलसंन्यासो वा" इति भाष्यम् । परमगुरुर्भगवानीश्वरस्तस्मिन् । यत्रेदमुक्तम्—

कामतोऽकामतो वापि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥

तत्फलसंन्यासो वा। फलानभिसन्धानेन कार्यकरणम् इति वाचस्पतिमिश्राः। एतेन शरणागतियोगः प्रपत्तियोगो वा लक्षितः। शरणागतिः प्रपत्तिर्वा नानुरक्तिमन्तरा सम्भाव्यते। अतएव परानुरक्तिरेवेश्वरे भक्तिरिति शाण्डिल्यः, परमप्रेमरूपेति नारदः। एवं भक्तियोगः भावयोगो वान्यत्र विततः।

(११) शिवयोगः, पाशुपतयोगश्च

वीरशैवानां सम्प्रदाये शिवयोगः प्रसिद्धः। वस्तुतः राजयोग एव शिवयोगः। यतः—

न भेदः शिवयोगस्य राजयोगस्य तत्त्वतः।
शिवार्थिनां तथाप्येवमुक्तो बुद्धैः प्रबुद्धये ॥

स च पंचधा। यथा—

ज्ञानं शिवमयं भक्तिः शैवी ध्यानं शिवात्मकम् ।
शैवव्रतं शिवार्चेति शिवयोगो हि पञ्चधा ॥

वीरशैवानां यानि भक्तमहेशप्रसादप्राणलिंगशरणैक्यनामभिः प्रसिद्धानि षट् स्थलानि तानि यमनियमादिषु अष्टाङ्गेषु अन्तर्भवन्ति।

पाशुपतयोगस्य वायुपुराणे वर्णनमुपलभ्यते। तस्यापि आसनप्राणरोधप्रतिहारधारणा-ध्यानादयोऽष्टावङ्गानि सन्ति। तमिऴभाषायां व्याकरणविषये लिखितः प्राचीनतमः तोल्काप्पियम् नाम ग्रन्थोऽस्ति। ईसातः पूर्वं चतुर्थे पञ्चमे वा शतकेऽयं लिखितः। अष्टानां योगाङ्गानां तत्रोल्लेखः विद्यते। सिन्धुप्रदेशे प्राप्तध्वंसावशेषाणामध्येतारः प्रतिजानते यत् भारते वर्षे ईसातः पूर्वं त्रिसहस्रतमेऽब्दे ततोऽपि पूर्वं वाऽयं पाशुपतो योगः प्रचलित आसीत्।

( १२ ) बौद्धयोगः

बुद्धदेवेन राजयोगापरनामधेयं ध्यानयोगमाश्रित्य ज्ञानमुपलब्धमिति नात्र विवादावसरः। 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन' इति योगसूत्ररीत्या तेनापि योगिना दुःखरूपं जगदिति निर्णीतम्। सामशाखाप्रवक्ता कश्चन प्राचीनतमोऽयं योगसूत्रकर्ता पतञ्जलिरिति बहवोऽभिप्रयन्ति। अतः बुद्धदेवादयं पूर्ववर्ती। मा वा अस्तु, तथापि सांख्ययोगाचार्या एवैतस्य गुरव आसन् इत्यत्र नास्ति शङ्कालेशः।

समस्तदुष्प्रवृत्तीनां दुष्कर्मणां च मूलमात्मवादमेवाकलय्य गौतमबुद्धः तथाविधां शाश्वतीं सत्तामनभ्युपजगाम। वंशाभावे कुतो वंशीरव इत्याभाणकमेवोन्नीतमत्र। एवं सत्यपि महायानप्रभावात् हठयोगस्य राजयोगस्य च परम्परा बौद्धसमाजेऽपि प्रच्छन्नरूपेण प्रचचाल।

अत्र विज्ञानात्मपदे शून्यता च परमात्मपदे प्रतिष्ठिताऽभूत् । चित्तमेव भवस्य निर्वाणस्य मूलम्- आह चानङ्गवज्रः —

अनल्पसङ्कल्पतमोऽभिभूतं प्रभञ्जनोन्मत्ततड़िच्चलं च ।
रागादिदुर्वारमलावलिप्तं चित्तं हि संसारमुवाच वज्री ॥
प्रभास्वरं कल्पनया विमुक्तं प्रहीणरागादिमलप्रलेपम् ।
ग्राह्यं न च ग्राहकमग्रसत्त्वं तदेव निर्वाणवरं जगाद ॥

बौद्धयोगस्य ज्ञानाय गुह्यसमाजाख्यो ग्रन्थः द्रष्टव्यः । अस्मिन् ग्रन्थे उपायस्य सेवा, उपसाधनं, साधनं, महासाधनं चेति चत्वारो भेदा निरूपिताः । सेवा च द्विविधा सामान्यसेवा, उत्तमसेवा च । वज्रचतुष्टयमिति सामान्यसेवाया अपरः पर्यायः । उत्तमसेवा च ज्ञानसुधाख्या । देवताविशेषस्य साक्षात्काराय विहिता चतुर्विधा प्रक्रियैव वज्रचतुष्टयम् । तच्च (१) शून्यताप्रत्ययः (२) शून्यताया बीजमन्त्रस्वरूपः परिणामः (३) बीजमन्त्रस्य देवताकृतिस्वीकारः (४) देवतायाश्च, सुषमायुक्तायाः तेजोमय्याः मूर्तेः परिग्रहः । षडंगयोग-साधनमेवोत्तमसेवा । तानि च योगांगानि-प्रत्याहारध्यानप्राणायामधारणानुस्मृतिसमाध्या-ख्यानि । गुह्यसमाजतन्त्रमतिरिच्य साधनमाला श्रीचक्रसंवरसद्धर्मपुण्डरीकसुखावतीव्यूहसूत्रा-दयः ग्रन्थाः एतदर्थं परिशीलनीयाः । किञ्च बुद्धघोषरचितौ 'शमथयानम्' विशुद्धिमग्गो इत्याख्यौ ग्रन्थौ च द्रष्टव्यौ ।

## ( १३ ) जैनयोगः

जैनाचार्यैर्योजनार्थकाद् युज् धातोः योगनिष्पत्तिः स्वीकृता । यथा —मोक्षेण योजनादेव योगो ह्यत्र निरुच्यते । ( द्वात्रिंशिका-यशोविजय )

मुक्खेण जोयणाओ जोगो । ( योगविंशिका )

जैनागमेषु विशेषतः ध्यानमेव योग इत्युल्लिखितम् । ध्यानं च चतुर्विधम्-आर्तं, रौद्रं, धर्मं शुक्लं च । आद्ये योगानुपयुक्ते, चरमे योगायोपयुज्येते । तत्र शुक्लं ध्यानं परिशुद्धमव्यवहितं मोक्षसाधनम् । एतदर्थं त्रिविधो मोक्षमार्गोऽवलम्बनीयः ।

'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ।' ( उमास्वाति-तत्त्वार्थसूत्रम् )

तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् । अन्यत्सुगमम् । अष्टांगयोगोऽपीह केनापि रूपेण स्वीकृत इति शिवम् ।

द्वैताद्वैतानुसन्धानमादधानैः सुयोगिभिः ।
संयोगो विप्रयोगश्च द्विधा योगो हि कीर्तितः ॥



# राजस्थानीयानां संस्कृतकृतीनां परिचयः

डॉ० नारायणशास्त्री काङ्करः

स्वातन्त्र्योत्तरं राजस्थाने अष्टाविंशति-वर्षेषु संस्कृत-कृतीनां प्रणयने पुस्तकरूपे प्रकाशने च या प्रगतिः सञ्जाता, सा सन्तोषजनिका नैव परं सर्वथा निराशाजनिका अपि नैव कथयितुं शक्यते। सहस्राधिकाः कृतयः तु प्रकाशन-सुविधायाः अभावेन अप्रकाशिताः एव तिष्ठन्ति, ततः अधिकाः च संस्कृत-पत्रपत्रिकासु विद्यालय-महाविद्यालय-पत्र-पत्रिकासु च प्रकाशिताः अपि पुस्तकाकारे नैव सम्मुखम् आयाताः। संस्कृतविद्वद्भिः संस्कृते हिन्द्यां च विविधेषु विषयेषु कृतयः विरचिताः सन्ति। एताः सर्वाः एव कृतयः संस्कृत-संस्कृति-विषयिकाः वर्त्तन्ते। हिन्द्याम् अपि यदि लिखिताः, तर्हि संस्कृतानभिज्ञेषु प्रचारार्थम् एव। अनेन संस्कृतस्य महत्त्वं वृद्धम् एव, क्षीणं न अभवत्। मैट्रिक-सैकेण्ड्री-हायर सैकेण्ड्री-पी. यु. सी-टी. डी. सी.—बी. ए-एम.ए-प्रभृतिषु परीक्षासु पाठनार्थम् अपि बहूनां संस्कृत-संकलन-पुस्तकानां प्रकाशनम् अभूत्। एतेषां पुस्तकानां संख्या शताधिका भवेत्। षष्ठ-कक्षातः अष्टम-कक्षापर्यन्तं याः संस्कृतपाठ्यपुस्तिकाः निर्मिताः, ताः अतिरिक्ताः सन्ति। अधुना अत्र विविध-स्थानतः प्रकाशितानां पुस्तकानां यथाज्ञानं परिचयः प्रस्तूयते—

| पुस्तकनाम | रचयिता/सम्पादकः | स्थानम् |
|---|---|---|
| १ - राजस्थानस्य कवयः ( संस्कृतकवीनां परिचयः ) | सं० श्रीपुरुषोत्तमशर्मा एवं श्रीलक्ष्मीनारायणपुरोहितः | राजस्थान साहित्य अकादमी, उदयपुर |
| २—गान्धिगाथा ( पद्यमयी ) | श्रीमधुकर शास्त्री | " |
| ३—संस्कृतकथाकुञ्जम् ( गद्यम् ) | पं० श्रीगणेशराम शर्मा | " |
| ४—शब्दविशेषगतकाव्यतावाद-प्रतिष्ठा ( गद्ये ) | श्रीलक्ष्मीनारायणपुरोहितः | " |
| ५—एकाङ्कि-संस्कृत-नवरत्न-सुषमा | डॉ०नारायणशास्त्रीकाङ्करः | " |
| ६—भारतविभूतयः ( महापुरुषाणां गद्ये जीवनचरितम् ) | श्रीरामेश्वरप्रसादशास्त्री | रमेश बुकडिपो, त्रिपोलिया बाजार, जयपुर—२ |
| ७—श्रीहरिभक्तचरितम् ( पद्यम् ) | श्रीरामचन्द्राचार्यः | ५०६, गोविन्दराजियों कारमभा जयपुर—२ |

| | | |
|---|---|---|
| ८—शिवस्तवः ( स्तोत्रम् ) | श्रीधरणीधरशास्त्री | विजय पब्लिकेशन, मदनगंज किशनगढ़ ( राज० ) |
| ९—हनुमल्लहरी ( पद्यमयी ) | श्रीहरिनारायणगोयल | जाट के कुएं का रास्ता, भैरुजी के मन्दिर के पास, जयपुर-२ |
| १०—माधुर्यशतकम् ( पद्यम् ) ( श्रीकृष्णमधिकृत्य ) | श्रीबदरीप्रसादशास्त्री | पपूरना, जि० झुंझनू |
| ११—श्रीललितासहस्रं काव्यम्* | पं० श्रीहरिशास्त्री | C/o वैद्यश्रीवाचस्पतिशर्मा आचार्यः—राजकीय आयुर्वेदकालेजः |
| १२—उदरप्रशस्तिः | ,, | उदयपुरम् ( राज० ) |
| १३—सुवर्णलक्ष्मीनक्षत्रमाला ( पद्यमयी ) | ,, | ,, |
| १४—संजीवनी-साम्राज्यम् ( चिकित्सायाः पद्यमयं पुस्तकम् ) | ,, | ,, |
| १५—प्रेम-सुधा ( पद्यमयी ) | ,, | ,, |
| १६—सिद्धिस्तवः ( पद्यमयी ) | ,, | ,, |
| १७—(क) वाणीलहरी ( पद्यमयी ) | ,, | ,, |
| १७-(ख) अम्बिकासूक्तम् ( पद्यात्मकम् ) | ,, | भारतीकार्यालय, गोपाल जी का रास्ता, जयपुर |
| १८—शुकनासोपदेशः | सं० डॉ०सुधीरकुमारगुप्त | भारतीमन्दिरम् अनुसन्धानशाला, पी-६, |
| १९—दशकुमारचरिते प्रथम उच्छ्वासः | ,, | विश्वविद्यालयपुरी, जयपुर-४ |
| २०—ऋग्वेद का परिचय | ,, | ,, |
| २१—पारस्करीयोपनयन सूत्रों की भूमिका | ,, | ,, |
| २२—सटिप्पणपारस्करीयोपनयनसूत्राणि | ,, | ,, |
| २३—वेदभारती ( वैदिकोपनिषत्सङ्ग्रहः सव्याख्यः ) | | ,, |
| २४—मेघदूत की वैदिक पृष्ठभूमि और उसका सांस्कृत सन्देश | ,, | ,, |
| २५—संक्षिप्तदशकुमारचरितम् | ,, | ,, |
| २६—वेदलावण्यम् ( भागद्वयम् ) [ सटिप्पणं वैदिकसूक्तसङ्कलनम् ] | ,, | ,, |

---

*( ललितासहस्रनामस्तोत्रस्य एकैकं नाम आश्रित्य निर्मितम् )

२७–ऋक्सूक्तानि „ विश्वविद्यालयपुरी, जयपुर–४
२८–केनोपनिषद् „ „
२९–अर्थव्यञ्जकताचित्रम् „ „
३०–भारतीयदर्शन के सम्प्रदाय „ „
३१–वाण और दण्डी : एक अध्ययन „ „
( अलग अलग प्रत्येक )
३२–वेदभाष्यकारों का आलोचनात्मक इतिहास „ „
३३–ऋग्वेद के ऋषि, उनका सन्देश और दर्शन „ „
( अंग्रेजी-हिन्दी `
३४–रावण-भाष्यम् „ „
३५–इन्द्रसूक्त „ „
३६–पुरुषसूक्त „ „
३७–वेद-भारती ( केन ) „ „
३८–लोकतन्त्रविजयः ( व्यायोगः ) पद्मशास्त्री राजस्थान अकादमी, जयपुर
( स्वरमंगला में प्रकाशन ) „
३९–लेनिनामृतम् „ „
( रूसदेशिनः महापुरुषस्य लेनिनस्य जीवनपरिचयः )
४०–गोलनवाङ्कुरम् पं० मल्लीनाथचौमाल भारतीय कार्यालय, गोपालजी
( ज्योतिषविषयकं पुस्तकम् ) का रास्ता, जयपुर
४१–प्रार्थनापुष्पाञ्जलिः ( स्वरचिता कृतिः ) वै० महावीरप्रसादजोशी डूण्डलोद
४२–प्रतापचरितम् ( पद्यात्मकम् ) „ „
४३–शृङ्गारशतकम् श्रीजनार्दनगोस्वामी बीकानेर
४४–वैराग्यशतकम् „ „
४५–भारतदिग्विजयं महाकाव्यम् श्रीसत्यनारायणशास्त्री „
४६–विद्याधरनीतिशतकम् पं०श्रीविद्याधरशास्त्री सरस्वतीसदन, अलखसागर
बीकानेर
४७–पूर्णानन्दम् ( नाटकम् ) „ „
४८–कलिपलायनम् „ „ „
४९–विक्रमाभ्युदयम् „ „ „
५०–लीलालहरी ( पद्यमयी ) „ „

५१–मत्तलहरी ,, ,, सरस्वतीसदन, अलखसागर बीकानेर
५२–सत्यसन्दोहिनी ,, ,,
५३–आनन्दमन्दाकिनी ,, ,,
५४–हरनामामृतं काव्यम् ,, ,,
५५–दुर्नलवलम् ( नाटकम् ) ,, ,,
५६–विश्वमानवीयं काव्यम् ,, ,,
५७–मरुमाधुरी ( पद्यमयी ) ,, ,,
५८–सनातनधर्मदर्शन ,, ,,
५९–संस्कृतसंस्कृति का विश्वसन्देश ,, ,,
६०–श्रीविष्णुचरितामृतम् ( चित्रकाव्यम् ) स्वामी लक्ष्मणशास्त्री अध्यक्ष संस्कृतविद्यालय
६१–श्रीरामविवाहः ( ,, ) ,, पो० नागौर, राजस्थान
६२–श्रीहरिस्तोत्रम् ( ,, ) ,, ,,
६३–श्रीहरिद्वादशाक्षरीस्तोत्रम् ( ,, ) ,, ,,
६४–श्रीरामपादयुगलीस्तवः ( ,, ) ,, ,,
६५–श्रीविष्णुचतुर्विंशत्यवतारस्तोत्रम् ,, ,,
६६–श्रीरामानुजस्तवद्वादशी ( स्तोत्रम् ) ,, ,,
६७–श्रीतुलसीस्तवपञ्चकम् ,, ,, ,,
६८–श्रीविष्णुस्तवषोडशी ,, ,, ,,
६९–श्रीविष्णुस्तवद्वादशी ,, ,, ,,
७०–श्रीविष्णुस्तुतिः ,, ,, ,,
७१–काव्यवाटिका पं० श्रीविद्याधरशास्त्री, सरस्वतीसदन, अलखसागर बीकानेर
७२–यथार्थदर्शन ,, ,,
७३–नवभारतस्मृतिः ( पद्यमयी ) ,, ,,
७४–भाषाविज्ञानस्य रूपरेखा श्रीगिरिधरलालव्यासः १२८, व्यासाश्रमः । ब्रह्मपोलः, उदयपुरम्
७५–पाणिनीयप्रवेशिका ,, ,,
७६–तर्कसंग्रहः ( श्लोकबद्धः ) ,, ,,
७७–काव्यकलाधरः (चन्द्रालोकस्य वृत्तिरूपः) ,, ,,
७८–मेदपाटेतिहासः ( श्लोकबद्धः ) ,, ,,

| | | |
|---|---|---|
| ७९–बालविलासः भागत्रयात्मकः (बालानांकृते) | | ब्रह्मपोल उदयपुरम् |
| ८०–संस्कृतपाठावलिः (किशोराणां कृते) भागत्रयात्मिका | | " " |
| ८१–संस्कृतप्रवेशिका | | " " |
| ८२–श्रीकृष्णचरितम् ( पद्यमयम् ) | | " " |
| ८३–आत्मचरितम् ( निजजीवनी ) | | " " |
| ८४–भगवान् बादरायणः | आचार्यमणिशङ्करद्विवेदी | आचार्यमणिशङ्करद्विवेदी स्मारिका समिति C/O श्रीकालूराम व्यास |
| ८५–सम्राजं विक्रमादित्यं प्रति | फतहसागर की नहरे, भीम चौक | |
| ८६–ग्रावा | जोधपुर—१ | |
| ८७–अध्यापक : | सूचना—८४ संस्थानः ९७ पर्यन्तं | |
| ८८–शारदी शोभा ( पद्यमयी ) | रचनाः उक्तस्मारिकायां | |
| ८९–अमरभारती | प्रकाशिताः सन्ति | |
| ९०–जोधपुरम् | | |
| ९१–गीतम् | | |
| ९२–भारतं भाषाविज्ञानं च | | |
| ९३–यविष्ठ | | |
| ९४–माघकवि का पाण्डित्य | | |
| ९५–शाह लतीफ का काव्य | | |
| ९६–संस्कृत की विश्व को देन | | |
| ९७–वसन्त-गीतम् | | |
| ९८–गान्धिगौरवम् ( पद्यात्मकम् ) | श्रीशिवगोविन्दत्रिपाठी | मातृशरणम् ए-६५, जनता कालोनी जयपुर–४ |
| ९९-संस्कृत व्याकरणशास्त्र का इतिहास | श्री युधिष्ठिर मीमांसक | जयपुर |
| १००–वैदिकस्वरमीमांसा | " | |
| १०१–वैदिकछन्दोमीमांसा | " | |
| १०२–महाभाष्यम् | " | |
| १०३–क्षीरतरङ्गिणी | " | |
| १०४–काशकृत्स्नव्याकरणम् | " | |
| १०५–भागवृत्तिसंकलनम् | " | |
| १०६–दशपादी उणादिवृत्तिः | " | |

१०७–निरुक्तसमुच्चयः श्री युधिष्ठिर मीमांसक जयपुर

१०८–शिक्षासूत्रम् ,,

१०९–शुक्लयजुर्वेदीयपदपाठ ,,

११० जयपुर-वैभवम् ( पद्यम् ) भट्टमथुरानाथशास्त्री मञ्जुनिकुञ्ज पृथ्वीराजरोड सीस्कीम जयपुर

१११–रामकण्ठाभरणम् ( पद्यकाव्यम् ) आशुकवि नित्यानन्दशास्त्री जोधपुर

११२–गान्धियुगागमः ( पद्यमयः ) श्रीबदरीनारायणपुरोहितः गुरुकुलचित्तौड़

११३–करणनवाङ्कुरम् श्रीमल्लीनाथचोमालः, बीकानेर

११४–यात्राविलासं ( गद्यकाव्यम् ) म०म० श्रीनवलकिशोरकाङ्करः, विद्यावैभवभवनम् सुमेरुकर्णमार्गः, रामगञ्जः, जयपुरम्—३

११५–धर्मकर्मसर्वस्वम् ,, ,,

११६–योगिराजस्वामिश्रीमाधवानन्दमहाराजानां जीवनदर्शनम् ,, ,,

११७–आधुनिककाव्यमञ्जरी ,, कल्याणमल एण्ड सन्स त्रिपोलियाबाजार जयपुर–२

११८–द्विजदशाप्रकाशः ( पद्यात्मकः ) ,, विद्यावैभवभवन, रामगञ्ज, जयपुर–३

११९–व्याकरणसाहित्यप्रकाश ( राजस्थानसर्वकारद्वारापुरस्कृत ) डॉ०नारायणशास्त्रीकाङ्कर अजमेरबुक कम्पनी त्रिपोलिया बाजार, जयपुर–२

१२०–आदर्श संस्कृत-प्रवेशिका ,, ,,

१२१–अभिनवकाव्यसंग्रहः ,, ,,

१२२–अभिनवकथासंग्रहः ,, ,,

१२३–अभिनव संस्कृतमाधुरी ,, स्टूडेंड बुककम्पनी त्रिपोलिया बाजार जयपुर–२

११४–संक्षिप्त-लघुकौमुदी ,, विद्यावैभवभवन, सुमेरुकर्णमार्गरायगंज जयपुर–३

१२५–सरलशिवराजविजयः ,, ,,

१२६–आदर्शसंस्कृतशब्दधातुरूपावलिः ,, अजमेर बुक कम्पनी जयपुर–२

१२७-सुबोध शब्द-धातुरूपावलिः ,, विद्यावैभवभवन सुमेरुकर्णमार्ग, रामगञ्ज, जयपुर -३

१२८–शुकनासोपदेश संस्कृतहिन्दीव्याख्या ,,

रामगञ्ज, जयपुर–३

१२९–विनायकानामभिनन्दनम् ,,

१३०–सरलसंस्कृतशिक्षक तीन भागों में पं० सूर्यनारायण रमेशबुकडिपो, त्रिपोलिया बाकार, जयपुर–२

१३१–गल्पलतिका ( गल्पसंग्रहः ) भारतीकार्यालय, गोपाल जी का रास्ता, जयपुर—

१३२–सरलसंस्कृतशिक्षणोपायः दुर्गादत्तमैथिलः

१३३–चित्रद्वारा संस्कृतशिक्षा कपिलदेवः ,,

१३४–आयुर्वेदविशेषाङ्कः ,,

१३५–आरोग्याङ्कविशेषाङ्कः ,,

१३६–शिवराज्योदयः ( पद्यमयः ) डॉ. श्री. भा. वर्णेकर ,,

एतदतिरिक्तं राजस्थानस्य विभिन्नेषु विश्वविद्यालयेषु अपि अनेकान् संस्कृतविषयान् अवलम्ब्य हिन्दीभाषायाम् अंग्रेजीभाषायां च नाना शोधग्रन्थाः शोधविद्यार्थिभिर्लिखिताः सन्ति। एषु केचन प्रकाशिताः केचन च अप्रकाशिता एव सन्ति' किन्तु सन्ति सर्वे महत्त्वपूर्णाः एव तथा संस्कृतभाषायाः संस्कृतभाषायाञ्च सुरक्षितानां तत्त्वानां प्रकाशकाः इति कृत्वा तेषामपि यथाज्ञानं नामानि प्रस्तूयन्ते—

| शोधग्रन्थः | लेखकः | विश्वविद्यालयः | निदेशकः |
|---|---|---|---|
| १–मेवाड़ का संस्कृतसाहित्य को योगदान | चन्द्रशेखर पुरोहित | उदयपुर विश्वविद्यालयः | डॉ० रामचन्द्र द्विवेदी |
| २–कालिदासके काव्यों में सादृश्येतर अलङ्कारों का प्रयोग | विष्णुरामनागर | ,, | ,, |
| ३–संस्कृत के प्रमुख नाटकों में अतिप्राकृत तत्त्व | मूलचन्द्र पाठक | ,, | ,, |
| ४–भट्टारकसकलकीर्ति : एक अध्ययन | विहारीलाल जैन | ,, | ,, |
| ५–वल्लभसम्प्रदाय और उनके सिद्धान्त | राधारानी सुखवाल | ,, | ,, |
| ६–उद्योतनसूरिकृत 'कुवलयमाल कहा' का सांस्कृतिक अध्ययन | प्रेमसुमन जैन | ,, | ,, |
| ७–Rishis in the Rigveda | लक्ष्मीनारायणशर्मा | राजस्थानविश्वविद्यालय | डॉ० फतहसिंह |
| ८–Dayananda's contribution to Vedic Exegesis | सुधीरकुमार गुप्त | ,, | ,, |

| | | | |
|---|---|---|---|
| ९–The concept of yajna in the Rigveda | नरेशचन्द्र पाठक, | राजस्थानविश्वविद्यालय | डा॰ फतहसिंह |
| १०–Goddesses in Rigveda | ज्ञानसावनी | ” | ” |
| ११–Concept of Dharma in Mahabharat | शकुन्तलारानी तिवारी | ” | ” |
| १२–Surgery in Ancient India | जे. सी॰ मिश्र | ” | ” |
| १३–The contribution of Kalidas to the Epic Poetry | मोहनलालगुप्त | ” | ” |
| १४–वामनभट्टबाण का एक अध्ययन | डब्ल्यू. आर॰ पाण्डे | ” | डॉ रामकुमार आचार्य |
| १५–A Psychological Study of Important characters of Mahabharat | उमा श्रीवास्तव | ” | डॉ पुष्करदत्त शर्मा |
| १६–विक्रम एवं तत्सम्बन्धी साहित्य | ब्रजनारायण पुरोहित | ” | विद्याधर मनीषी |
| १७–Diplomacy in Sanskrit Literature | कृष्णाकुमारी मेहता | ” | ” |
| १८ संस्कृतसाहित्य में सादृश्यमूलक अलंकारों का विकास | ब्रह्मानन्दशर्मा | ” | ” |
| १९–प्राचीन एवं अर्वाचीन दृष्टि से पञ्चमहाभूतों का तुलनात्मक अध्ययन | वेदप्रकाश शर्मा | ” | ” |
| २०–मीमांसादर्शन का समालोचनात्मक इतिहास | मदनलाल शर्मा | राजस्थानविश्वविद्यालय | पी॰ ए॰ पट्टाभिराम |
| २१–कविमेधाव्रताचार्य : व्यक्तित्व और कृतित्व | सुशीलादेवी गुप्ता | ” | डॉ॰ ब्रह्मानन्द |
| २२–आर्यसमाज का संस्कृतभाषा और साहित्य को योगदान | भवानीलाल माथुर | ” | ” |
| २३–कालिदास में सादृश्यविधान | कमलप्रभा | ” | ” |
| २४–हविर्यज्ञः उनकी प्रक्रिया और रहस्य | अभयदेव शर्मा | ” | ” |

| | | | |
|---|---|---|---|
| २५–Social Philosophy in same Later Smrities | श्रीरमा | ,, | डॉ० ब्रह्मानन्द |
| २६–संस्कृतनाटकों के नायकों का तुलनात्मक अध्ययन | आशा देवलिया | ,, | डॉ० रमाशङ्कर जैतली |
| २७–शान्तरसः भावना और विकास | मीनामाथुर | ,, | ,, |
| २८–Dravidian influence in Sanskrit | वीणा जे सिंह | ,, | ,, |
| २९–ऐतरेय ब्राह्मण का एक अध्ययन | नाथूलाल पाठक | ,, | डॉ० सुधीरकुमार गुप्त |
| ३०–The conception of cow in the Rigveda | बदरीप्रसाद पंचोली | ,, | ,, |
| ३१–मैत्रायणी संहिता : एक अध्ययन | वेदकुमारी | ,, | ,, |
| ३२–तैत्तिरीय संहिता : एक अध्ययन | नारायण काङ्कर | ,, | ,, |
| ३३–काठकसंहिता : एक अध्ययन | कृष्णाबोस | ,, | ,, |
| ३४–जैन संस्कृतमहाकाव्य | सत्यव्रत | ,, | ,, |
| ३५–जयपुर की संस्कृतसाहित्यको देन ( १६६६-१८३४ ई० ) | प्रभाकरशर्मा | ,, | डॉ०पुरुषोत्तमलाल भार्गव- |
| ३६–भास, कालिदास, शूद्रक और अश्वघोष के संस्कृतनाटकों में समाज चित्रण | चित्रा शर्मा | ,, | ,, |
| ३७–महाकवि बिल्हणः व्यक्तित्व एवं कृतित्व | सुशीला सोलंकी | ,, | ,, |
| ३८–राजतरंगिणी में चित्रित भारतीयसंस्कृति | सुभाषचन्द्र तनेजा | ,, | ,, |
| ३९–कादम्बरी का काव्यशास्त्रीय अध्ययन | राजेश्वरी भट्ट | ,, | ,, |
| ४०–A Critical Study of the Puranic Myths | विजयशङ्कर शर्मा | राजस्थानविश्वविद्यालयः | डॉ० पुरुषोत्तम भार्गवः |
| ४१–The Storical Dramas in Sanskrit Literature | श्यामलाल शर्मा | ,, | ,, |

| | | | |
|---|---|---|---|
| ४२–The Ramayana of Valmiki | श्रीकृष्ण ओझा | ,, | षोत्तम भार्गवः |
| ४३–The Karna Rasa in Sanskrit Literature | अशोकलता जैन | ,, | ,, |
| ४४–A Critical Study of Shudraka's Mricchakatika | बी. एन. शर्मा | ,, | ,, |
| ४५–The Shatapatha Brahman : A Critical Study | उर्मिलादेवी शर्मा | ,, | ,, |
| ४६–A Study of Mudra-Rakshasa | सन्तोष गोठवाल | ,, | ,, |
| ४७–Birds and Beasts in Kalidas and Post Kalidas Kavyas | रामदत्त शर्मा | ,, | ,, |

एतस्मादतिरिक्तं निम्नलिखिताः शोधग्रन्थाः Ph. D. पदवीप्राप्त्यर्थं निर्मीयमाणाः सन्ति, आशास्यते, एतेऽपि निकटभविष्य एव सम्पन्नाः स्युरिति, तद्यथा—

| | | | |
|---|---|---|---|
| १–महाभारत का शान्तिपर्व : एक अध्ययन | सुदर्शन बजाज | राजस्थानविश्वविद्यालयः | डॉ० पुरुषोत्तमलाल भार्गवः |
| २–संस्कृत रूपकों में त्रासदीय तत्त्व | गायत्री पँवार | ,, | ,, |
| ३–देवीभागवत-एक सांस्कृतिक अध्ययन | बालचन्द्र | ,, | ,, |
| ४–भास के रूपकों का नाट्यशास्त्रीय अध्ययन | रमा गुप्ता | ,, | ,, |
| ५–A Study of Venisamhara | बी. एल जैन | ,, | ,, |
| ६–The Evolution of Puranic Pantheon | मदनमोहन शर्मा | ,, | ,, |
| ७–A Critical & Analytical Study of Bhasa ( Emotions ) | वसन्त जैतली | ,, | ,, |
| ८–जैन परम्परा में रामकथा | सीतारामशर्मा | ,, | डॉ० सुधीरकुमार गुप्ता |

| | | | |
|---|---|---|---|
| ९–वैदिक साहित्य में वैज्ञानिक सत्य | मृदुला गुप्ता | ,, | डॉ० सुधीरकुमार गुप्ता |
| १०–दयानन्दभाष्य में वैदिक देवताओं का स्वरूप | मधुबाला शर्मा | ,, | ,, |
| ११–अथर्ववेद की पदार्थयोजना | रति सक्सेना | ,, | ,, |
| १२–माण्डूक्यकारिकाः एक दार्शनिक अध्ययन | कामिनी शर्मा | ,, | ,, |
| १३–पौराणिक निर्वचनों का एक अध्ययन | शिवसागर त्रिपाठी | ,, | ,, |
| १४–उणादिसूत्रों का एक अध्ययन | सुमित्रा चतुर्वेदी | ,, | ,, |
| १५–जैन 'हरिवंशपुराण' का सांस्कृतिक अध्ययन | प्रेमचन्द जैन | राजस्थानविश्वविद्यालय | डॉ० सुधीर-कुमार गुप्त |
| १६–ऋग्वेदः काव्यशास्त्रीय अध्ययन | छोटेलाल मीना | ,, | ,, |
| १७–पुरुषसूक्त का विवेचनात्मक अध्ययन | कुसुमलता भटनागर | ,, | श्री प्रवीणचन्द्र जैनः |
| १८–कन्नडजैनसाहित्य के सन्दर्भ में जैन महापुराणों का एक अध्ययन | एन. एम. धर्मराज जैन | ,, | ,, |
| १९–संस्कृतकाव्यों में प्रसंगतः प्राप्त राजनैतिक तथ्यों का शास्त्रीय विवेचन | रश्मि शर्मा | ,, | ,, |
| २०–तीर्थङ्कर आदिनाथ और उनका भारतीय संस्कृति के अध्ययन में योग | कोकिला जैन | ,, | ,, |
| २१–नाटक-वृत्तियों का रसानुसारी अध्ययन | अरुणा भार्गव | ,, | डॉ० रमाशङ्कर जैतली |
| २२–प्रशमरति उमा स्वाति : एक समीक्षात्मक अध्ययन | पूर्णिमा श्रीमाल | ,, | ,, |
| २३–ब्रह्मवैवर्त्तपुराणः एक अध्ययन | वैकुण्ठनाथ शर्मा | ,, | श्री शिवसागर त्रिपाठी |
| २४–संस्कृत के पौराणिक महाकाव्यः आलोचनात्मक अध्ययन | पुष्पा गुप्ता | ,, | डॉ० गङ्गाधर भट्ट |

| | | | |
|---|---|---|---|
| २५–काव्यशास्त्रीय परिवेश में संस्कृत के लौकिक नीतिकाव्य | शशि शर्मा | ,, | डॉ० गङ्गाधर भट्ट |
| २६–संस्कृतकाव्य के प्रकृति-चित्रांकन-शिल्प एवं परम्परा ( महाकाव्य के सन्दर्भ में ) | ज्योति भट्ट | ,, | ,, |
| २७–शब्दशास्त्रियों के सन्दर्भ में 'काव्यप्रकाश' की टीकाओं का तुलनात्मक अध्ययन | रामरतन | ,, | ,, |
| २८–संस्कृत के प्रमुख नाटकों का मनोवैज्ञानिक अध्ययन | वी. एन दुवे | ,, | डॉ० पुष्करदत्त शर्मा |
| २९–संस्कृत के पाँच प्रमुख महाकाव्यों पर पूर्वोत्तर प्रभाव ( पुराणों के विशिष्ट सन्दर्भ में ) | शिवशङ्कर व्यासः | ,, | ,, |
| ३०–A Comparative Study of the Naiyayikas Logical Positions | पी. सी. गोस्वामी | ,, | ,, |
| ३१–Bhavabhuti A Critical Study | देवकृष्णशर्मा | ,, | श्री विद्याधर 'मनीषी' |
| ३२–म० म० पं० गिरिधरशर्मा चतुर्वेदी व्यक्तित्व और कृतित्व | कैलासचन्द्र त्रिपाठी | राजस्थान विश्वविद्यालय | डॉ०प्रभाकर शर्मा |
| ३३–(क)–कविशिरोमणि भट्ट श्रीमथुरानाथ शास्त्रीः व्यक्तित्व और कृतित्व | उषा भार्गव | ,, | ,, |
| ३३–(ख)–स्वातन्त्र्योत्तर राजस्थानीय संस्कृत साहित्य | पुष्पा श्रीवास्तव | ,, | ,, |
| ३४–अनर्घराघवः एक अध्ययन | आर. आर. गुप्त | ,, | डॉ० एन. एन. पाठक |
| ३५–संस्कृत साहित्य में विवाहसंस्था | रुक्मिणी भार्गव | ,, | ,, |
| ३६–विष्णुधर्मोत्तरपुराण : एक सांस्कृतिक अध्ययन | एच. सी. पन्त | ,, | डॉ० रामकुमार आचार्य |
| ३७–संस्कृत के प्रमुख नाटकों में धार्मिक तत्त्व | बाबूलाल अंजना | उदयपुर विश्वविद्यालय | श्री सूर्यप्रकाश व्यास |

| | | | |
|---|---|---|---|
| ३८–वेदान्त और बौद्धदर्शन के आलोक में शैवदर्शन | | ,, | श्री सूर्यप्रकाश व्यास |
| ३९–संस्कृत के प्रमुख महाकाव्यों में सादृश्यमूलक अलङ्कार | वसन्तीलाल शर्मा | ,, | ,, |
| ४०–शब्दप्रमाण का आलोचनात्मक अध्ययन | हेमलता बोलिया | ,, | ,, |
| ४१–अमरचन्द्रकृत 'काव्यकल्पलता' की टीकाओं का सम्पादन तथा अध्ययन | निर्मला आँचलिया | ,, | ,, |
| ४२–राजस्थानी भाषा और साहित्य पर संस्कृत का प्रभाव | गेहरीलाल शर्मा | ,, | डॉ० विष्णुराय नागर |
| ४३–सांख्यकारिकाओं की टीकाओं का तुलनात्मक अध्ययन | चन्द्रकान्त दवो | ,, | ,, |
| ४४–तन्त्रालोक का समालोचनात्मक अध्ययन | कमला द्विवेदी | ,, | ,, |
| ४५–संस्कृतकाव्य पर कामशास्त्र का प्रभाव | कन्हैयालाल शर्मा | ,, | ,, |
| ४६–भारतीय काव्यशास्त्र की दार्शनिक पृष्ठभूमि | श्यामलाल शर्मा | ,, | ,, |
| ४७–वैदिक साहित्य में यज्ञ का स्वरूप | पुष्पा ताखरे | ,, | गयाचरण त्रिपाठी |

जयपुरस्थ-नभोवाणी-केन्द्रतः प्रसारणार्थमपि समये समये संस्कृते अनेकेषां लघुनाटकानां लेखनं सञ्जातम्। यदि तेषाम् अत्र समावेशः नैव क्रियेत तर्हि मन्ये इयं चर्चा अपूर्णा एव तिष्ठेत् इति विचार्य प्रसारितानां नामानि प्रसारणतिथि-सहितानि लेखकनाम्ना सह अधस्तात् प्रदीयन्ते—

## प्राचीनानि संक्षिप्तीकृतानि ध्वनिनाटकानि—

| नाटकनाम | संक्षेपकर्ता | प्रसारकनभोवाणीकेन्द्रम् | दिनम् |
|---|---|---|---|
| १–प्रतिमा | श्रीमोहनवल्लभपन्तः | जयपुरम् | १-२-१९५६ ई० |
| २–कर्पूरमञ्जरी | ,, | ,, | २६-९-५६ |
| ३–कुन्दमाला | ,, | ,, | २०-२-५७, १६-२-६० |
| ४–प्रतिज्ञा-यौगन्धरायणम् | ,, | ,, | २२-५-५७ |

| | | | |
|---|---|---|---|
| ५–कर्णभारम् | ,, | जयपुरम् | २०-११-५७ |
| ६–मृच्छकटिकम् | श्रीकलानाथशास्त्री | ,, | ६-५-५६ |
| ७–रत्नावली | ,, | ,, | १८-७-५६ |
| ८–प्रियदर्शिका | भट्टश्रीमथुरानाथशास्त्री | ,, | ७-११-५६ |
| ९–अविस्मारकम् | श्रीदयानन्दशास्त्री | ,, | ५-१२-५६ |
| १०–दूतवाक्यम् | ,, | ,, | ६-११-५७ |
| ११–विद्यापरिणयम् | ,, | ,, | १६-३-५८ |
| १२–जीमूतवाहनम् (नागानन्दनाटकोपजीवि) | श्रीभवदत्तशास्त्री | ,, | ६-३-५८ |
| १३–मृच्छकटिकनाटकस्य पूर्वार्द्धम् | डॉ० रेवाप्रसादद्विवेदी | ,, | १३-३-५७ |
| १४–विरहिणी (प्राचीननाटकीयविरहदृश्याधारितम्) | श्रीरूपनारायणपाण्डेयः | ,, | १२-६-५६ |
| १५–स्वप्नवासवदत्तम् | श्रीगङ्गाधरद्विवेदी | ,, | १५-१-६० |
| १६–अभिज्ञानशाकुन्तलम् | डॉ० इन्दुशेखरः | ,, | १-११-५६ |
| १७–नागानन्दम् | डॉ० सोमनाथगुप्तः | ,, | १०-१०-५६ |
| १८–मुद्राराक्षसम् | श्रीहरिरामाचार्यः | ,, | २-२-५८ |
| १९–चण्डकौशिकम् | श्रीचौथमलशर्मा | ,, | ३-४-५६ |
| २०–उत्तररामचरितम् | श्री रामचन्द्रवामनकुम्भारे | ,, | २-४-६१ |

## आङ्गलभाषातः संस्कृते अनूदितं ध्वनिनाटकम्—

| | | | |
|---|---|---|---|
| १–न्यायाधिकरणम् 'मर्चेन्ट आफ वेनिस' नाटकस्य रूपान्तरम् | श्रीदिनेशचन्द्रशास्त्री | ,, | १५-७-६० |

## मौलिकानि संस्कृतध्वनि-नाटकानि—

| | | | |
|---|---|---|---|
| १–मञ्जुला | भट्टश्रीमथुरानाथशास्त्री | ,, | १६ ५६, ८ ५८ |
| २–विरहिणी | भट्टश्रीकलानाथशास्त्री | ,, | ४-१-५६ |
| ३–महाभिनिष्क्रमणम् | ,, | ,, | ८-५-५७, ११ ५८ २२ ५९ |
| ४–शिवपार्वतीसंवादः | डॉ० पुरुषोत्तमलालभार्गवः | ,, | ४-१२-५७ |
| ५–रुक्मिणी | भट्टश्रीकलानाथशास्त्री | ,, | १-१-५८, ४ ५९ |
| ६–कर्मक्षेत्रम् | ,, | ,, | १२-६-५९ |

| | | | |
|---|---|---|---|
| ७–विक्रमादित्यम् | ,, | ,, | १७ १/६०, १० ४/६१ |
| ८–चित्तौडसिंहम् | भट्टश्रीकमलनाथशास्त्री | जयपुर | ५-३-६१ |
| ९–मृगाङ्कावली | श्रीगङ्गाधरद्विवेदी | ,, | २३-१०-५९ |
| १०–माद्यम् | डॉ० प्रभाकरशास्त्री | ,, | १८-१२-५९ |
| ११–भारतम् | भट्टश्रीकलानाथशास्त्री | ,, | ८-४-६० |
| १२–वेतालसिद्धिः | श्रीहरिरामाचार्यः | ,, | २२-४-६० |
| १३–महाराजभोजस्य राज्यसभा | ,, | ,, | १४-८-६० |
| १४–शङ्कराचार्यम् | डॉ० प्रभाकरशास्त्री | ,, | २५-६-६१ |
| १५–पृथ्वीराजविजयम् | भट्टश्रीकलानाथशास्त्री | ,, | २६-११-६१ |
| १६–भर्तृहरिनिर्वेदम् | श्रीगङ्गाधरद्विवेदी | ,, | ३०-४-६२ |

एवम् अनेकैः पण्डितैः अनेकानि नाटकानि इतरप्रान्तेषु अपि नभोवाणीकेन्द्रतः विलिख्य प्रसारितानि भवेयुः इति अहम् आशासे। एषां नभोवाणीनाटकानां पुस्तकरूपे प्रकाशनं यदि स्यात् तर्हि अनेन एकं नूतनं साहित्यं सम्मुखं सर्वेषाम् आगन्तुं शक्नोति।

राजस्थानिनां साम्प्रतिकानां संस्कृतसाहित्यकाराणाम् एकं परिचयकोशं उदयपुरस्था राजस्थानसाहित्यसङ्गम (अकादमी)–नाम्नी संस्था अपि प्रकाशयितुं निरता वर्तते। १९४७ खिष्टाब्दतः १९७७ खिष्टाब्दं यावत् राजस्थानीयं संस्कृतसाहित्यं परिचाययितुम् अजयमेरौ राजकीयमहाविद्यालये अधीयाना संस्कृतविभागस्य शोधच्छात्रा सुश्रीपुष्पा प्रयत्नपरा अस्ति। एवम् एव उत्तरप्रदेशे 'लखनऊ'–नगरे बी० एस० एन० बी. स्नातक महाविद्यालये संस्कृतविभागाध्यक्षः डॉ० श्रीवीरभद्रमिश्रः महाशयः अपि १९५७ खिष्टाब्दतः अधुनावधिकानां समस्तभारतीयानां संस्कृतसाहित्यकाराणां परिचयसङ्ग्रहे निरतः श्रूयते। इतः पूर्वं डॉ० श्रीप्रभाकरशास्त्रिणा जयपुरीयपण्डितानां कृतिविषये द्वौ शोधग्रन्थौ राजस्थानविश्वविद्यालयाय प्रस्तुतौ। डॉ० श्रीदिवाकरशर्मणा विक्रेयर्नार–(बीकानेर)स्य विदुषां विषये तथा डॉ० श्रीचन्द्रशेखरशर्मणा च मेदपाटीय (मेवाड़)–प्रान्तीयानां पण्डितानां कृतित्वादिसम्बन्धे स्वकीयेन शोधग्रन्थेन यथाशक्ति बहुः परिचयः कारितः। किं बहुना ? संस्कृते साहित्य-निर्म्माणस्य धारा राजस्थाने गङ्गाधारावत् प्रवहन्ती वर्तते। उदारैः संस्कृतानुरागिभिः यदि प्रकाशनसाहाय्यं प्रदीयेत तर्हि प्रचुरतरं सर्वोपयोगि साहित्यं सम्मुखं समायातुं शक्नोति इति अलं बहुविस्तरेण।

आम्, यदि अत्र अभिनव-साहित्य-निर्म्माणे सहयोग-दात्रीणां नियतकालिकानां संस्कृत-पत्र-पत्रिकाणां चर्चा न क्रियेत, तर्हि अयं लेखः अपूर्णः एव तिष्ठेत्–इति विचार्य स्वातन्त्र्योत्तरं जन्म गृहीतवतीनां तासां संक्षेपतः परिचयः प्रस्तूयते—

१—भारती—'भारती भवनम्, गोपाल जी का रास्ता, जयपुर-३। अस्मात् स्थानात् त्रयोदशवर्षेभ्यः अविरतं प्रकाश्यमाना संस्कृतप्रचारपरिषदः मुखपत्रिका समस्ते देशे लब्धप्रचारा यशस्विनी जीवति। अस्याः माध्यमेन कतिपयाः संस्कृतकृतयः पुस्तकरूपे अपि प्रकाशिताः। वर्त्तमाने अस्याः सम्पादकः पं० श्रीदीनानाथत्रिवेदी 'मधुपः' महाभागः वरीवर्त्ति।

२—कल्याणी—प० श्रीगोविन्दप्रसाददाधीचस्य सम्पादकतायां द्वित्रवर्षाणि प्रकाशम् आगत्य इदानीम् इयं मासिकपत्रिका चिरनिद्रासुखम् अनुभवति। अस्या अपि जन्मभूमिः जयपुरम् एव अस्ति।

३—संस्कृत-सुधा—कल्याणीवत् इयम् अपि देवानाम् एव सुलभा। अस्याः सम्पादनं श्रीमतः उमेशशास्त्रिणः सम्पादकत्वे अभूत्।

४—स्वरमङ्गला—उदयपुरस्य-राजस्थानसाहित्यसङ्गमद्वारा प्रकाश्यमाना इयं त्रैमासिकी पत्रिका उत्तरोत्तरं स्वकीयं कलेवरं पुष्णती सुतरां जनमनो रञ्जयन्ती आस्ते। इयम् अधुना त्रिवर्षदेश्या एव विद्यते। अस्यां येषां रचनाः प्रकाशम् आयान्ति, तेभ्यः पुरस्कारः अपि दीयते। वर्त्तमाने अस्याः सम्पादकः स्वर्णपदकी विख्याततमः विपश्चित् डॉ० श्रीसुधीरकुमारगुप्तमहानुभावः अस्ति।

५—वैजयन्ती—राजस्थान-संस्कृत संविद्द्वारा प्रकाश्यमानायाः अस्याः द्वौ अङ्कौ दृष्टिपथम् आयातौ। इयं वार्षिकी प्रतीयते। शैशवम् अतीत्य प्रौढिं प्राप्ता एषा चिरं जीवतु इति कामयामहे। इयम् अपि जयपुरतः एव प्रकाश्यते, कार्यालयश्च अस्याः जयपुर-महाराज-संस्कृतकालेजभवने विद्यते।

संस्कृते पाक्षिकी, साप्ताहिकी, दैनिकी वा न काचन अपि पत्रिका अधुनावधि राजस्थानतः प्रकाशिता। आम्, दैनिकपत्रस्य आंशिकपूर्त्ति 'कानोताभवन, हल्दियों का रास्ता, जयपुर-३' तः प्रकाश्यमानं हिन्दी-दैनिकपत्रम् 'अधिकारः' अवश्यं कुर्वत् अस्ति। अस्मिन् पत्रे संस्कृतभाषायां लिखितानां वार्तानां कृते 'संस्कृत-समाचारः' अनेन नाम्ना एकः स्तम्भः नियतः वर्तते। अस्मिन् स्तम्भे विगतेभ्यः अष्टभ्यः वर्षेभ्यः प्रतिदिनं सरल-संस्कृते लिखिताः राष्ट्रियाः सामाजिकाः राजनैतिकाः, सांस्कृतिकाः सर्वविधाः एव समाचाराः प्रकाशिताः भवन्ति, यान् सहस्रतः अपि अत्यधिकाः पाठकाः साभिरुचि पठन्ति। संस्कृत-प्रचारे 'अधिकार' पत्रस्य अयम् अद्वितीयः अनुकरणीयश्च सहयोगः संस्कृतपत्रजगति स्वर्णाक्षरैः उल्लेखनीयः स्थास्यति इति।

★

# वेदाङ्गेषु निरुक्तस्य स्थानम्

डॉ॰रामाशीषपाण्डेयः

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति महाभाष्यकारेण महर्षि-पतञ्जलिना महाभाष्यस्य पश्पशाह्निके यद्वर्णितं तेन वेदाध्ययने वेदज्ञाने च षडङ्गस्य महत्त्व-मतितरां स्पष्टं भवति। विद्या द्विविधा—पराऽपरा चेति। वेदषडङ्गादीनामपरविद्यात्वमुपनिषदां परविद्यात्वञ्च[1]। षडङ्गेषु शिक्षा, व्याकरणम्, कल्पो, निरुक्तम्, छन्दो, ज्योतिषञ्चेति महर्षि-पाणिनिना प्रोक्तम्—

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतं,
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥"

(पा॰ शि॰ ४१-४२)

प्रकाण्डपण्डितेन भास्कराचार्येण स्वकीये सिद्धान्तशिरोमणौ गणिताध्यायेऽपि एवमेव प्रकाशितम्—

"शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी,
श्रोत्रमुक्तं निरुक्तञ्च कल्पः करौ।
या तु शिक्षाऽस्य वेदस्य सा नासिका,
पादपद्मद्वयं छन्द आद्यैर्बुधैः॥"

वेदाध्ययने अतिगम्भीरस्य वेदार्थस्यावबोधने च सर्वेषां वेदाङ्गानां महत्त्वसत्त्वेऽपि निरुक्तस्य स्वकीयं वैशिष्ट्यमिति प्रकाशयितुं विवेचनं प्रस्तूयते—

वेदाध्ययने वेदज्ञाने वा द्वे साधने अपेक्ष्येते। प्रथमं बाह्यसाधनभूतं वेदस्य यज्ञस्य वा बाह्यस्वरूपप्रकाशकं छन्दः कल्पः, शिक्षा, व्याकरणं, ज्योतिषञ्चेति पञ्चाङ्गम्। वेदाध्ययनस्यान्त-

---

१. द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवाऽपरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा 'यया तदक्षरमधिगम्यते'—

मुण्डकोपनिषदि—१।१।४-५

रिक्तसाधनञ्चास्त्यपरम् येन वेदार्थप्रत्यायनं भवति। अस्मिन्नर्थप्रत्यायने वेदाङ्गेषु निरुक्तमेव स्वार्थं साधयति। अर्थज्ञानं विना वेदस्याध्ययनं ज्ञानाय यज्ञाय वा निरर्थकमिति प्रोक्तं महर्षिणा यास्काचार्येण—

"स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥"
"यद् गृहीतमविज्ञानं निगदेनैव शब्द्यते,
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥"

—निरुक्ते १।६

विद् ज्ञाने, विद् विचारणे, विद्लृ लाभे, विद् सत्तायामिति' धातोर्निष्पन्नो वेदशब्दः ज्ञानविज्ञानवाचकः जीवनस्याध्यात्मिकभौतिकसांस्कृतिकविचाराचारप्रकाशकः। ब्रह्मणो निश्वसिते वेदे समग्रज्ञानं सन्निहितमतो अर्थज्ञानं विनैव वेदस्याध्ययनं कथं ज्ञानसाधकमिति विचारणीयम्।

षडङ्गेषु शिक्षा महत्त्वपूर्णा। स्वरवर्णाद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षेति ऋग्वेदभाष्यभूमिकायां सायणाचार्येण स्पष्टं प्रतिपादितम्। स्वरवर्णाद्युच्चारणस्य महत्त्वं नाविदितम्। यतोहि—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्॥"

(पा० शि०-५२)

परमेतादृशवैशिष्ट्यसम्पन्ना शिक्षा स्वरवर्णाद्युच्चारणेन यथायथमुपदेशेन वेदस्य भौतिकरूपाणां शब्दानां व्याख्यानमात्रमेव सम्पादयति।

कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रमिति ऋक्प्रातिशाख्यानुसारेण ज्ञायते। कल्पस्य व्युत्पत्त्यर्थस्तु-कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति। श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-शुल्वसूत्रादयः कल्पसूत्रस्य प्रकाराः वेदविहितश्रौताग्नि-गृह्याग्नियज्ञानां वर्णाश्रमकर्त्तव्यानां यज्ञवेदिनिर्माणे विशिष्टसिद्धान्तानां वर्णनं सम्पादयन्ति। अतः कल्पो यज्ञविधीनां कर्मणामुद्घाटकः न तु मन्त्रार्थावबोधकः।

व्याकरणाद्विभक्त्यादिपरिज्ञानं भवति। व्याक्रियन्ते शब्दा अनेनेति व्याकरणमिति महाभाष्ये पस्पशाह्निके यदुक्तं तेन शब्दानां व्युत्पादनं शब्दानुशासनञ्च व्याकरणमिति।

वि + आङ् + कृ + ल्युट् ( अण् ) इति निष्पन्नेन व्याकरणशब्देन शब्दानां व्युत्पादनमेव स्पष्टं प्रतीयते ।[१] अतो वेदस्यार्थप्रत्यायने व्याकरणं न सर्वार्थसाधकमिति ।

'छन्दांसि छादनात्' नि० ७।३ इति छद्धातोर्निष्पन्नेन छन्दश्शब्देन वेदे प्रयुक्तानां मन्त्राणां गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्तिबृहती-उष्णिगादीनि छन्दांसि मन्त्ररचनाप्रकाराण्यवज्ञेयानि । वेदाध्ययने छन्दसः ज्ञानमावश्यकमतो बृहद्देवतायामुक्तम् —

"अविदित्वा ऋषिः छन्दो दैवतं योगमेव च ।
योऽध्यापयेद् यजेद् वापि पापीयान् जायते तु सः ॥"
( बृ० ८।१३६ )

एवमेव—

"यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यति प्र वा मीयते पापीयान् भवति ।" ( का० १।१ )
परं छन्दांसि न तु वेदार्थप्रतिपादकानीति स्पष्टम् ।

'वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः आदधीत शरदि वैश्य आदधीत' इति तैत्तरीयब्राह्मण–१।१।२ वाक्यानुसारेण यज्ञकालार्थसिद्धये ज्योतिषं महत्त्वपूर्णम् । कालविशेषविधयश्चापि भवन्ति यथा सम्वत्सरविधयः ( सम्वत्सरमेतद्व्रतं चरेत्–तै० आ० १।३।२।१ ) मासविधयः ( 'मासि-मासि सत्रपृष्ठानि उपयन्ति, मासि मासि अतिग्राह्या गृह्यन्ते'—तै० सं०–७।५।१।५ ) एवमेव पक्षविधयः तिथिविध्यादयः । यज्ञार्थसमयनिरूपणं ज्योतिषस्य प्रधानप्रयोजनमिति । वेदस्यार्थावबोधने न किञ्चित्तस्य प्रयोजनम् ।

उपर्युक्तान्येतानि पञ्चाङ्गानि वेदस्य बाह्यतत्त्वानि शब्दोच्चारणप्रकारादीनि सन्ति । परं वेदस्यान्तरिकतत्त्वपरिज्ञानायार्थप्रकाशनाय च निरुक्तमेव साधनम् । यतो हि ऋग्वेदभाष्यभूमिकायां सायणाचार्येण प्रकटितम्—

"अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्"

वेदस्यार्थप्रत्यायनं महत्त्वपूर्णमिति 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि' इति निरुक्तोद्धृतेन वचनेन प्रमाणितं भवति । पुनश्चार्थज्ञानाय न निरुक्तादृतेऽन्यान्यङ्गानि समर्थतराणीति वेदाङ्गेषु निरुक्तस्य स्थानं स्पष्टमेव ।

१. "वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति । सोऽब्रवीद् वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते । तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मादियं व्याकृता वागुद्यते ।"
( तै० सं०–६।४।७।३ )

पाणिनीयशिक्षायां 'निरुक्तं श्रोत्रमुच्यते' इति कथनं वेदपुरुषस्य श्रोत्रत्वमभिव्यञ्जयति। शब्दस्य सम्बन्धः श्रोत्रेणैवास्ति। 'आकाशगुणः शब्दः' नि० १४ इति प्रतिपादयता यास्काचार्येण श्रोत्रस्य विषयः आकाशदेशः तस्य गुणः शब्दश्चेति संकेतितम्। शब्दः ब्रह्मस्वरूपः सकलप्रत्यायनक्षमः। ब्रह्मस्वरूपस्य शब्दतत्त्वस्याचार्येण भर्तृहरिणा वाक्यपदीये सातिशयोल्लेखः कृतः—

"अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥"

(वा० १।१)

यदि वेदे शब्दब्रह्मणः अस्तित्वं विद्यते यत् श्रोत्रस्य विषयः। पुनः निरुक्तस्य श्रोत्रत्वप्रतिपादनेनार्थसमन्वितस्य शब्दब्रह्मणः संकेतः स्पष्टः। अर्थवत्त्वे सति शब्दस्य शब्दत्वमिति नाविदितं विद्वद्भिः। यथा जगतः निर्माणे प्रकृतिपुरुषयोरन्योन्याश्रयत्वमपेक्षितं तथैव वाङ्मयेऽपि शब्दार्थयोरन्योन्याश्रयत्वमावश्यकम्[1]। शब्दं विनाऽर्थप्रकाशनमाधारहीनमसंभवमर्थहीनस्य शब्दस्य प्रकाशनमप्यनर्थकमेव।

शब्दानामर्थस्तेषां प्राणस्वरूपः। पाणिनेः 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' अष्टा० १।२।४५ इति सूत्रानुसारेण निरर्थकस्य शब्दस्य प्रातिपदिकार्थायोग्यत्वं सुविदितम्। यथा प्राणसत्त्वे देहसत्ता, प्राणरहितस्य देहस्य न तु व्यक्तिसंज्ञा, तस्य शरीरस्योपयोगित्वमपि नास्ति। तथैवार्थरहितः शब्दः निर्जीवस्वरूपः। पुनः निर्जीवस्यार्थरहितस्य शब्दस्य प्रयोगो नैव भवति। वेदे प्रयुक्ताः सर्वे शब्दाः अर्थयुक्तास्तेषां शब्दानामर्थप्रकाशनं निरुक्तेनैव, यतो हि निरुक्तस्य वृत्तिभूमिकायां स्पष्टम्—

"प्रधानञ्चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात्। न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा बाह्यं शास्त्रमस्ति, तात्पर्येण यदशेषान शब्दान् निर्ब्रूयात्। यदपि च क्वचित् क्वचिदन्यशास्त्रे शब्दनिर्वचनम् अतएव तदित्युपलक्ष्यम्। यथा शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात्। एवं शब्दार्थनिर्वचनपरिज्ञानं निरुक्तात्। न चानिरुक्तो मन्त्रार्थो व्याख्यातव्यः इति। तस्मादर्थपरिज्ञानाभिनिवेशाददमेव प्रधानमिति दिक्।

★

---

१. "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥"

—(रघु०—१।१)

# वामनाचार्य-सिद्धान्त-निर्धारणे मम दृष्टिः

डॉ० रेवाप्रसादद्विवेदी

"परमार्थसुधा" या १।३ अङ्के प्रकाशिता वामनाचार्यसिद्धान्तविषयिण्यो मम कारिकाः भूयोऽप्यवालोचयं पं० मा० चि० दीक्षित कृतां परमार्थसुधाया एव १।४ अङ्के प्रकाशितां तत्समीक्षामनुशील्य। अत्र मम निवेदनं यद् मदीयासु कारिकास्वासु रीति-गुण-सौन्दर्याणाममेदः सर्वथैवाशक्योत्प्रेक्षः। येऽत्र मम तर्कास्तेषामेष सारः —

काव्यस्यात्मा सौन्दर्यम्। तच्च गुणालंकारहानोपादानसाध्यम्। एवं च साधनत्वमेव गुणानां सौदर्यं प्रति। ततश्चाप्रधानत्वमेव। साधनत्व–प्रधानत्वयोर्विप्रतिषिद्धत्वात्। रीतिश्च तथाविधवैभवैव तस्या गुणविशिष्टपदरचनासतत्त्वात्। एवं च 'रीतिरात्मा काव्यस्ये"–ति सूत्रे यदात्मपदं तत् साधन–रूपाप्रधानीभूत–सामग्री–घटकत्व–व्याप्यात्मत्व–परतयैव निनीष्येत, न तु साध्यरूप–सौन्दर्य–गतात्मत्व–परतया। एवं च कण्ठरवेणानुक्तमपि सौन्दर्यस्य काव्यात्मत्वं वामनग्रन्थे न न तर्कसहम्, उक्तमपि चातर्कसहं रीतेः। सौन्दर्यं च मुख्यतः गुणौपम्यादिफल-भूत–तत्त्व–लक्षणालंकारापरपर्यायमिति सौन्दर्यवाद एषोऽलंकारवादनाम्नापि शक्यव्यपदेशः।

एवमत्र दीक्षितवर्यैर्मम कारिकाणां गुण–रीति–सौन्दर्याभेदपरत्वं यदाशङ्कितं तत्र मूलं न पश्यामि।

"वैदर्भमार्गस्य प्राणा दश गुणा" [ काव्यादर्श–१।४२ ] इति दण्डिनो वचनस्य यो वामनवचनतयाऽभ्युपगमभ्रमो मयि दीक्षितमहाशयैः पातितस्तत्रापि ममैवाघन्यता तन्त्रम्। "वैदर्भीप्रभृतीनां च प्राणा एते गुणा" इति या कारिका सा ममोद्गारः। सोऽयं वामन-विषयक इति तु भिन्ना कथा। नैतावता वामनस्यैतद् वचनमिति स्वीकर्तुं शक्यते। नास्ति च क्षतिर्वामनवचनतयापि विन्यासे। "रीतिरात्मा काव्यस्य, विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा" इति सूत्रयतो वामनस्यापि वचनानां तत्रैव पर्यवसानात्।

एतच्च सर्वं मया काव्यालंकारसूत्रस्य १९७१–ईशाब्दे चौखम्भातः प्रकाशिते संस्करणे स्वभूमिकायां २७ पृष्ठे साम्प्रतं च स्वोपज्ञायाः काव्यालंकारकारिकायाः २७–पृष्ठगतया वृत्त्या संग्रहकारिकया च वितत्य विवेचितमिति समीक्षकान् विदुषस्तत्रावधातुमुपनिमन्त्रयामि।

भूयश्चैतन्निवेदयामि यद् "वामनः सौन्दर्यस्यैवात्मभावे प्रामुख्यं सिसाधयिषति, न तु रीतेरि"–ति।

★

# अभिनव-साहित्य-परिचयः

१—संस्कृतश्रीः ( पाक्षिकी संस्कृतपत्रिका )

सम्पादकः —श्री एस. वी. राधाकृष्णशास्त्री "वैद्यः"

प्राप्तिस्थानम्—Sanskrit Education Society, 25 Tanjavur Tank Street, Tiruchirapalli—620002 Tamil–Nadu

आकारः—डबलडिमाई, पृष्ठानि—१८, मूल्यम्–प्रत्यङ्कम्–०.३०, वार्षिकम्–६.००

संस्कृत-एजूकेशन-सोसायिटीतः प्रकाश्यमानायामस्यां पत्रिकायां संस्कृतनिबन्धातिरिक्तं तमिलभाषामाध्यमेन संस्कृतशिक्षणस्यापि प्रशंसनीयः प्रयासो विद्यते। अभिनवानि खण्ड-काव्यादीन्यपि क्रमशोऽस्यां प्रकाश्यन्ते येन काव्यरसास्वादलोलुपाः सहृदया अपि लाभान्विता भवन्त्विति। पत्रिकासम्पादका एतदर्थमभिनन्द्यन्ते।

२—हरिप्रेष्ठ-महाकाव्यम्

कवयिता—महाकविः श्रीवनमालिदासशास्त्री

प्राप्तिस्थानम्—श्रीवनमालिदासशास्त्री, श्रीकृष्णानन्द-स्वर्गाश्रम रेलवेफाटक के पास, वृन्दावन ( मथुरा ) उ० प्र०

आकारः —डबलडिमाई, पृष्ठानि—२५८, मूल्यम्—१०.०० ।

अष्टादशसर्गात्मके महाकाव्येऽस्मिन् कवयितुः श्रीशास्त्रिणः सहाध्यायिनः श्रीहरिप्रेष्ठ-महाभागस्य विचित्रं चारित्र्यं चित्रितमस्ति। जन्मना ब्रजभूमिमलङ्कुर्वाणेन येन पञ्चविंशति-वर्षीयेण शिक्षकपदम्, नवोढा प्रियतमा, परिणता माता, कनिष्ठो भ्राता च परित्यक्तास्तथा वैराग्यमवलम्ब्य भगवतः श्रीकृष्णस्य प्राप्तये तपश्चरितम्।

महाकाव्यस्य प्रायः सर्वाण्येव लक्षणान्यत्र दृश्यन्ते। शरदृतोः प्रावृडृतोश्च साङ्गोपाङ्ग-वर्णनातिरिक्तं प्रातःसूर्योदय-सध्याकाल-चन्द्रोदय-रात्रि-प्रभृतीनामपि विचित्रं वर्णनमस्ति। वन-पर्वत-नदीनां स्वाभाविकं चित्रणं नितरामावर्जकं विद्यते! प्रसिद्धेषु छन्दःसु निबद्धमेतत् महाकाव्यं बहुत्र महाकविकालिदासमनुसरति।

काव्यनायकचारित्रेण मातापितृभक्तेः, गुरुभक्तेः, श्रीहरिभक्तेस्तथा साधारणजन-समाजसेवायाः प्रतिपदमुपदेशो लभ्यते। संस्कृतभाषायाः महत्त्वम्, शिक्षकाणां गौरवम्, छात्राणां गुरुभक्तिः, सतीर्थ्यानां परस्परं प्रेम, देशभक्तिप्रभृतयोऽप्यत्र यथास्थानमुपनिबद्धाः।

वस्तुतो महाकाव्यमेतत्सर्वथाऽभिनवां पद्धतिमुद्भावयति प्रमाणयति च कवयितुर-नवद्यां प्रसादगुणगुम्फनरीतिम्। राष्ट्रभाषानुवादेन सह सम्बलितमिदं प्रत्येकं संस्कृतज्ञविदुषा सहृदयेनावश्यं संग्राह्यमास्ते।

३--श्रीवनमालिप्रार्थना-शतकम्

रचयिता--महाकविः श्रीवनमालिदासशास्त्री,

प्राप्तिस्थानम्--श्रीवनमालिदासशास्त्री, श्रीकृष्णानन्द-स्वर्गाश्रम, रेलवे फाटक के पास, वृन्दावन ( मथुरा ) उ० प्र०

आकारः--डबलडिमाई, पृष्ठानि--१३६, मूल्यम्--सस्नेहमध्ययनम्।

स्तोत्रकाव्यसंग्रहेऽस्मिन्-श्रीवनमालिप्रार्थना-शतकम्, श्रीराधारमण-शतकम्, श्रीभक्त-नाम-मालिका तथा अनेकविध-स्तोत्राणि च सन्ति। नामानुसारेण स्तोत्राणां विषयः स्पष्ट एव किन्तु वैशिष्ट्यमिदं यदत्र न। केवलं स्तवनमात्रम् किन्तु तद्व्याजेन कविना स्तोत्र-काव्यस्य सुन्दरतमं निदर्शनमुपस्थापितम्।

यथास्थानं स्वयमापतिताः शब्दार्थालङ्काराः कविविवक्षितस्फोरणेन सहैव सचेतसो भगवद्भक्तान् विदुषः समाकर्षणे सुतरां समर्थाः। पाठकानां सौविध्यार्थं हिन्द्यामनुवादोऽपि रचितो ग्रन्थकर्त्रा।

---विद्याधरो द्विवेदः

४—प्रमाण-परीक्षा ( दर्शनम् )

रचयिता–आचार्यविद्यानन्दः

सम्पादको रूपान्तरकारकश्च —

न्यायाचार्यः, एम. ए., पीएच्.डीत्याद्यनेकोपाधिभूषितो डॉ० दरबारीलाल-कोठियामहोदयः।

प्रकाशकः·मन्त्री, वीरसेवामन्दिर-ट्रस्ट, चमेली कुटीर, १।१२८ डुमराँव कालोनी, अस्सी, वाराणसी

मूल्यम्—५.००, पृष्ठानि–१६२, आकारः—डबलडिमाई

यद्यपि जैनमतावलम्बिनो दार्शनिकशिरोमणेराचार्यविद्यानन्दस्य प्रणीतं "प्रमाण परीक्षा" ग्रन्थरत्नं प्रकाशितचरमेवास्ते परञ्चैतस्याद्यावधि जातेषु मुद्रणेषु सन्दर्भानुसारेण कुत्र-चन शुद्धपाठाभावः, कुहचन पाठान्तरं, क्वचन अक्षराणां विलोपः, क्वचिच्च तेषां न्यूनत्व-माधिक्यञ्चेत्यादिबहूनां दोषाणां सत्त्वात् यथास्थलं तन्निराकरणपुरःसरं सश्रमं संशोधनादि-दुरूहतरं कार्यं कुर्वाणेन सम्पादकमहोदयेन बोधसौकर्याय विषयानुकूलः शीर्षकोपशीर्षक-सम्वलितोऽनुच्छेदो व्यधायि, तथा प्रमाणस्य लक्षणसंख्याविषयफलपरीक्षात्मकैश्चतुर्भिः प्रकरणै-र्ग्रन्थस्यास्य विभागोऽपि दर्शितः। प्रस्तावनायाञ्च प्रमाणविषये विचारयतां विभिन्नानां नैयायिकमीमांसकबौद्धादीनां दार्शनिकानां विचारं सुस्पष्टं प्रदर्श्य मूलग्रन्थस्य हिन्दी-रूपान्तरञ्च कृत्वा परिशिष्टविषयसूच्यौ निर्दिष्टे। एतेन चैतत्संस्करणं सर्वाङ्गपूर्णं सत् पूर्वेभ्यो विशिष्टतां लभमानं सम्पादकमहोदयस्य वैदुष्यप्रकाशकं श्लाघ्यतमं प्रयासमभिव्यनक्तीति सम्पादकीयेन लेखेन विज्ञायते।

मूलरूपान्तरयोरवेक्षणेन स्पष्टं प्रतीयते यद् ग्रन्थकर्तुरभिप्रायस्य आनुकूल्यमेव बिभर्ति रूपान्तरम्। विभिन्नदार्शनिकविचारोपस्थापनक्रमस्तु सुतरामावर्जयिष्यति पाठकानिति मे दृढो विश्वासः।

५—सांख्ययोगकोशः

प्रणेता—पं०श्रीकेदारनाथत्रिपाठी दर्शनविभागाध्यक्षः काशीहिन्दूविश्वविद्यालयः

प्रकाशकः—श्रीवीरेन्द्रत्रिपाठी, एफ. एफ. १८ बी. एच. यू., वाराणसी—५

मूल्यम्—५-२५, आकारः– डबल क्राउन, पृष्ठानि– १७८।

न्यायादिदर्शनान्तरकोशग्रन्थानामुपलभ्यत्वेऽपि सांख्ययोगकोशयोरलभ्यत्वात् तज्जिज्ञासूनां काठिन्यमभिलक्ष्य दर्शनशास्त्रतलस्पर्शिगभीरज्ञानवद्भिः पण्डितश्रीत्रिपाठिमहोदयैः सपरिश्रमं प्रामाणिकं सांख्ययोगशास्त्रयोर्व्यवहृतानां पारिभाषिकशब्दानामकारादिक्रमेण मतभेदानुसारेणार्थप्रदर्शनपुरःसरं पूर्वं सांख्यशास्त्रस्य पश्चात् योगशास्त्रस्य च कोशद्वयात्मकं ग्रन्थरत्नमेकं "सांख्ययोगकोश" नाम्ना व्यरचि।

एतेन श्लाघ्यतमेन प्रयासेनानुमन्ये यदत्र प्रविविक्षूणां छात्राणां तथा दर्शनान्तरज्ञानवतामपि विदुषामर्थावबोधे सौकर्यं स्यादिति। —गोविन्दपाण्डेयः

६—संस्कृत-कवि-समीक्षा ( श्लोकबद्धा )

प्रणेता—डॉ०अमरनाथपाण्डेयः, अध्यक्षः संस्कृतविभागस्य, काशीविद्यापीठम्, वाराणसी।

प्रकाशकः—चोखम्भा ओरियन्टालिया, गोपालमन्दिरलेन, वाराणसी–२२१००१।

मूल्यम्—१२.००, आकारः–डबलडिमाई, पृष्ठानि—१६०।

पुस्तकेऽस्मिन् संस्कृतजगति सुप्रतिष्ठितानां पञ्चदश-पुरातनकवीनामनितरसुलभं समीक्षणमनुष्टुबार्योपजातिप्रमृतिभिश्छन्दोभिर्नातिविस्तृतं २२७ संख्यकेषु पद्येष्वनवद्येषूपनिबद्धं विद्यते। कवीनां सर्वविधान् पक्षानादाय श्लोकबद्धमेवंविधं समीक्षणं प्रायो नाद्यावधि विहितं केनापि प्रतिभावता पुरातनकविना ऋते एकपक्षीयप्रशस्तेः। अत्र तान्यपि तत्तत्कवीनां वैशिष्ट्यानि निर्दिष्टानि यानि पूर्णतः प्रागप्रकाशितान्यासन्। तेषां कवीनां भाषा-विचार-ज्ञान-प्रतिभा-दर्शनो विषयास्तथा तत्सन्देशाश्चात्र विशेषेण प्रतिपादिताः। कविसमीक्षकेण डॉ० पाण्डेयमहोदयेन परमोपयोगिन्यां स्वहिन्दीभूमिकायां संस्कृतसाहित्यस्य विविधप्रवृत्तीरुल्लिखता साम्प्रतं तत्स्वरूपं कीदृशं भवेदिति निरदेशि।

पाठकानां सौविध्याय विशेषावबोधाय च प्रत्येकं श्लोको हिन्दीभाषानुवादेनाऽऽवश्यकटिप्पण्यादिभिश्चानुप्राणितो वर्तते। परिशिष्टे 'प्राचीनकवीनां दृष्टावेते कवयः' इत्यनेन नामानुक्रमणिकया च सम्पुष्टम्, सुसज्जिताऽऽवरण-स्वच्छाऽक्षर-पत्रादिभिर्मण्डितञ्च ग्रन्थरत्नमिदमवश्यमेव कविसमालोचकेन सचेतसा प्रत्येकविदुषा संस्कृतानुरागिणा समवलोकनीयं संग्राह्यञ्चास्ति।

अभिनवां पद्धतिमाविर्भावयन्तीयं 'संस्कृत-कवि-समीक्षा' सहृदयान् कवीन्नूनमेव प्रवर्तयिष्यति नूत्नकाव्यसर्जनायेत्याशास्यते ।

७—उत्तररामचरितम्

व्याख्याकारौ—डॉ० रामअवधपाण्डेयः - संस्कृतविभागः गोरखपुरविश्वविद्यालयस्य तथा डॉ० रविनाथमिश्रः - संस्कृतविभागः सतीशचन्द्र-डिग्रीकालेज, बलिया ।

प्रकाशकः—विश्वविद्यालयप्रकाशन, चौक, वाराणसी-२२१००१ ।

मूल्यम्—१२.००, आकारः-डबलडिमाई, पृष्ठानि-४१० ।

प्रसिद्धटीकाकर्त्तुर्वीरराघवस्य भवभूतिभावतलस्पर्शिन्याख्यया व्याख्यया समलङ्कृतेऽस्मिन् संस्करणे हिन्द्यामनुवादः टिप्पण्यादिकं च विशेषेण छात्राणां काव्यरसिकानाञ्चोपादेयमस्ति । यत्र-तत्र घनश्याम-जीवानन्दयोष्टीकयोर्विषयवस्तुविचारम्, अन्येषां च विदुषां मतमतान्तरमुपस्थाप्य स्वमतप्रतिष्ठापनपुरःसरं ग्रन्थग्रन्थयो विशदं स्फोरिताः ।

ग्रन्थस्यारम्भे प्रसिद्धसमालोचकानां डॉ० विद्यानिवासमिश्रमहोदयानां विपुलशरीरा हिन्दी-प्रस्तावना एतन्नाटकं नाटककर्त्तारं भवभूतिञ्च सम्यगवगमयितुं सुतरां प्रभविष्यतीति द्रढीयान् विश्वासः । प्रस्तावनयाऽनया पाश्चात्य-पौरस्त्योभयविधसमालोचकदृशा परीक्षितो भवभूतिः स्वस्य करुणरसोपस्थापनवैदग्धीं प्रत्यक्षयति ।

व्याख्यात्रोरारम्भिकहिन्दीभूमिकया, परिशिष्टरूपेण चाकारादिक्रमेण छन्दोनिर्देशपुरस्सरं श्लोकानामनुक्रमणिया, कविविषयकप्राचीनसूक्तिभिश्च सम्मिश्रितं ग्रन्थरत्नमिदं नूनमेव छात्राणां विदुषाञ्च कृते मोदावहं भविष्यति । —विद्याधरो द्विवेदः



निवेदना—स्वीय-नूत्नकृतीन् परिचययितुं समालोचनाय चाभिनव-साहित्य-प्रणेतृभिरेकैकस्य पुस्तकस्य प्रतिद्वयं प्रेषणीयमिति सानुरोधं निवेद्यते ।

सार्वभौम-संस्कृत-प्रचारकार्यालयस्य

## कालिदासजयन्ती-समारोहः

सार्वभौम-संस्कृत-प्रचार-कार्यालयद्वारा गतदिसम्बरमासे २४, २५, २६ तमदिनाङ्केषु दुर्गाकुण्डस्थे श्रीहनुमान्प्रसादपोद्दारस्मृतिसेवाट्रस्टे ( अन्धविद्यालये ) समायोजितस्त्रिदिवसीयः कालिदासजयन्तीसमारोहः सोल्लासं समपद्यत, यत्र नैकेषां संस्कृतज्ञविदुषां कालिदाससम्बद्धानि विभिन्नसूक्ष्मविषयकाणि भाषणानि, कालिदासकाव्यानां सरागं शास्त्रोक्तरीत्या मधुरं गानानि, श्लोकपाठाश्च समभूवन् । समारोहेऽस्मिन्नेका कालिदास-साहित्य-प्रदर्शन्यपि

समायोज्यत यत्र महाकवेरस्य समेषामेव काव्यानां देश-विदेशभाषास्वनेकासु प्रकाशितानि विभिन्नानि संस्करणानि, अनुवादाः, महाकविकालिदाससम्बन्धिता विविधभाषासूपनिबद्धा बहवो ग्रन्थास्तथा नानाविधसाहित्यातिरिक्तमन्यग्रन्थानामेका विस्तृतसूची अपि स्थापिता आसन् ।

जयन्त्याः प्रथमदिने उद्घाटनं कुर्वाणैः सुगृहीतनामधेयैर्विद्वद्वर्यैराचार्यहजारीप्रसाद-द्विवेदिमहाभागैः कालिदासस्य कविजगति अद्वितीयत्वं प्रतिष्ठाप्य तत्काव्यनाटकानामत्यन्तं मनोरञ्जकं किन्तु नितान्तं गम्भीरविवेचनं समुपस्थापितम् । आचार्यद्विवेदिमहाभागैः विस्तृते स्वभाषणे महाकवेरन्यत्र सुदुर्लभं महत्त्वं प्रत्यपादि । कार्यक्रमस्यारम्भे काशीहिन्दूविश्व-विद्यालयीय-संगीतशास्त्रविभागस्याध्यक्षया डॉ॰ प्रेमलताशर्ममहोदयया स्वसहयोगिनीभ्यां डॉ॰ उर्मिलाशर्मा-कुमारीज्योत्स्नामुखर्जीभ्यां सह कालिदासकाव्यानां मङ्गलाचरणश्लोकचतुष्टयं क्रमशः भूपाली-शंकरा-हमीर-केदाररागेषु शास्त्रीयपद्धत्या सुमधुरं प्रस्तुतम् । संस्कृतविश्व-विद्यालयस्य कुलपतिपदमलङ्कुर्वाणाः पण्डितश्रीकरुणापतित्रिपाठिमहाभागाः कालिदास-साहित्य-प्रदर्शनीमुद्घाटितवन्तः । कार्यालयसञ्चालकानां पण्डितश्रीवासुदेवद्विवेदिशास्त्रिणां धन्यवादप्रदानेन सह प्रथमदिवसीयः कार्यक्रमः समाप्यत ।

समारोहस्य द्वितीयदिने आचार्यबदरीनाथशुक्लमहोदयानां साभापत्ये सम्पन्नायां कालि-दास-काव्यगोष्ठ्यां पण्डितश्रीबटुकनाथशास्त्री खिस्ते, डॉ॰ रेवाप्रसादद्विवेदी तथा आचार्य-पट्टाभिरामशास्त्री मुख्यवक्तारः आसन् । मनीषिभिरेभिः कालिदासकाव्यानामन्यकाव्येभ्यो बहुधा वैशिष्ट्यं सोद्धरणमुपस्थाप्य कृतित्वेन तत्त्वान्वेषितया च विस्तृतं विवरणं प्रदत्तम् । श्रीखिस्तेमहोदयेन कालिदासस्य काव्येषु स्वाभाविकत्वं सुगम्यत्वं तथा औदात्यम्, डॉ॰ द्विवेदीमहाभागेन कालिदासस्य स्वस्थः शृङ्गारः, विश्वात्मवादस्तथा अमृतोपमफलद्रष्टृत्वम्, आचार्यपट्टाभिरामशास्त्रिभिश्च मेघदूतीयशापस्य तत्त्वम् कामस्य च विश्वव्यापित्वं प्रदर्शितानि । श्रीशुक्लमहाभागास्तु कालिदासस्यानेकशास्त्राभिज्ञत्वं विशदं प्रकाश्य तस्य न्यायशास्त्रपारज्ञतत्वं वैलक्षण्येन प्रतिष्ठापयाम्बभूव । कार्यक्रमस्यारम्भेऽन्ते च पण्डितश्रीराधा-कान्तओझा-गोविन्दपाण्डेयाभ्यामृतुसंहारकाव्यस्यानवद्यानि पद्यानि विविधरागेषूपनिबध्य श्रावितानि ।

जयन्त्यास्तृतीयेऽन्तिमे च दिने आचार्यपट्टाभिरामशास्त्रिमहाशयानामाध्यक्ष्ये "कालि-दासकृतीनां विश्वयात्रा" इति विषये विदुषां भाषणानि जातानि तथाऽन्ते कवयितृभिः 'कविभारती' सदस्यैरन्यैश्च स्वकविताभिर्महाकवये कालिदासाय श्रद्धाप्रसूनाञ्जलिरर्पितः । तत्र वक्तृषु आचार्यश्रीसीतारामचतुर्वेदिनः, डॉ॰ वागीशशास्त्रिणः तथा डॉ॰ रामशङ्करभट्टाचार्यः

प्रमुखा आसन्। कालिदासस्य काव्येषु देशस्य संस्कृतिः, नागरिकजीवनम् भौगोलिक-स्थितिः, जीव-वनस्पति-ज्ञानविज्ञानप्रभृतीनि सम्यगुपन्यस्तानीति सोदाहरणं प्रतिपादयद्भिरा-चार्यचतुर्वेदिमहाभागैः कस्यचन कवेः स्वातन्त्र्यावलम्बनसन्दर्भे कालिदासोऽद्वितीयनिदर्शन-त्वेन नानानिदर्शनैर्निर्दिष्टः। डॉ० रामशङ्करभट्टाचार्याः पाश्चात्यविदुषां ग्रन्थसम्पादन-वैशिष्ट्यं प्रतिपादयन्तः कालिदासकृतीनां देश-विदेशेषु प्रचार प्रसारसम्बन्धे सम्पादनविषये चैतिहासिकं प्रमाणिकञ्च विवरणमुपस्थापितवन्तः। डॉ० वागीशशास्त्रिभिस्तु वैदेशिकसंस्कृतज्ञ-विदुषः भृशं प्रशंसयद्भिः श्रीवाक्कनवेमहोदयः सर्वप्रिय उदाहृतः। श्रीशास्त्रिभिरुक्तम् यद् भारतीयैरस्माभिर्वैदेशिकाः संस्कृतज्ञा अवश्यमेव सम्मानयितव्याः। अध्यक्षीये स्वभाषणे आचार्यपट्टाभिरामशास्त्रिणो महाकवेः कालिदासस्य परममीमांसकत्वं शाकुन्तलनाटकमाध्यमेन सुदृढं समसाधयन्।

तदनन्तरं पण्डितबटुकनाथशास्त्रिणां संयोजकत्वे यैः कविभिः काव्यमयः श्रद्धाप्रसूना-ञ्जलिः समर्पितस्ते सन्ति—श्रीविनयमिश्रः, डॉ० कपिलदेवपाण्डेयः, श्रीराधाकान्तओझा, पण्डितशिवजीउपाध्यायः, पण्डितगोविन्दपाण्डेयः, डॉ० परमहंसमिश्रः, डॉ० वागीशशास्त्री, डॉ० रेवाप्रसादद्विवेदी, पण्डितश्रीवासुदेवद्विवेदी 'शास्त्री' तथा आचार्यपट्टाभिरामशास्त्री।

समारोहस्यानन्यतमसंयोजयित्रा श्रीगोपाललालवर्ममहोदयेनोक्तम् यत् आगामिनि वर्षे समारोहोऽयमस्माभिर्व्यापकरूपेणाऽयोजयिष्यते येनास्माकं साधारणजनानां स्वकविनाऽधिकः परिचयः स्यात्तथाऽस्य काव्यैर्यथासम्भवं लाभान्विता भवेम।

कार्यालयसञ्चालकानां पण्डितश्रीवासुदेवद्विवेदिशास्त्रिणां धन्यवादज्ञापनद्वारा त्रिदिवसीयः कार्यक्रमोऽयं समाप्तिमगात्।

—विद्याधरो द्विवेदः

## श्रद्धाञ्जलि-समर्पणम्

नानाशास्त्रपरमाचार्या वर्णाश्रमधर्मप्रचारव्रतैकदीक्षिता धर्मशास्त्रकाननप्रचण्डपञ्चानना: शास्त्ररत्नाकर-धर्मरत्न-धर्ममार्तण्ड-सर्वतन्त्रस्वतन्त्रेतिविविधविरुदावलिविभूषिता सुगृहीतनाम-धेया महामहोपाध्याय—श्रीसदाशिवशास्त्रिमुसलगाँवकरचरणाः २०३४ वैक्रमसंवत्सरस्य विगते मार्गशीर्षमासे शुक्लपक्षे पूर्णिमायां मन्दवासरे ( दि० २४ दिसम्बर १९७७ ) सवितुरस्त-समये पञ्चवादने स्वेष्टस्य परमेशस्य नारायणेति नाममन्त्रं जपन्तः स्वीयम्पार्थिवं शरीरं विहाय कीर्तिशेषतामभजन्त। ते खलु वयसो नव-नवतितमे वर्षे नश्वरं कलेवरं विहाय शाश्वतिकं ब्रह्मपदमारुढा इति अशोच्याः शोच्यास्तु वयं सम्प्रति सञ्जाता ये हि तदीयदर्शन-वञ्चिताः स्मः।

यद्यपि एषां शतवर्षदेशीयानां महामहोपाध्यायशास्त्रिचरणानां परलोकगमनं, विकरालेऽस्मिन् कलिकाले नाऽकालिकमभवत् तथाप्यद्य एतेषां वियोगेन प्रौढवैदुष्यस्य या हानिः समुत्पन्ना तां विगणय्य विषीदामः चिन्तयामश्च हानेरस्याः प्रपूरणं कदा भगवान् नारायणो विधास्यतीति ।

महामहोपाध्यायशास्त्रिचरणैरध्यापितेषु दिग्दिगन्तप्रसृतेषु छात्रवर्गेषु ये प्रसिद्धतमास्तेषां नामसङ्कीर्तनं विधीयते । स्वतन्त्रभारतस्य प्रथमराष्ट्रपतिः—बाबू राजेन्द्रप्रसादजी, स्वतन्त्रभारतस्य प्रधानमन्त्री—श्रीलालबहादुरशास्त्री, पं० रमाकान्तमालवीयः, डॉ० अमरनाथझामहोदयः, श्रीश्यामाकुमारीनेहरू, अजमेरमेओकालेजे सर्ववरिष्ठपण्डितः—श्रीब्रह्मदत्तशास्त्री साहित्याचार्य, एम. ए., ब्रजभाषाया अन्तिमो महाकविः – श्रीसत्यनारायणकविरत्नमहोदयः, गवालियरराज्ये राजसभाया राजपण्डितः–पं०श्रीसीतारामशास्त्रिकारखेड़करः, इत्थं बहवो विद्यन्ते ।

पूज्यपादानां श्रीशास्त्रिचरणानां परिवारः पुत्र–पौत्र–प्रपौत्रादिभिः परिपूर्णोऽस्ति । तत्र ज्येष्ठः पुत्रः डॉ० गजाननशास्त्रिमुसलगाँवकरमहोदयः काशीहिन्दुविश्वविद्यालये मीमांसा-धर्मशास्त्रविभागाध्यक्षपदे समासीनः साम्प्रतं सेवाकार्यनिवृत्तः अध्ययनाध्यापनलेखनादिकार्ये संलग्नोऽस्ति ।

द्वितीयः पुत्रः पं०वेणीमाधवशास्त्रिमहोदयः साहित्याचार्यो मध्यप्रदेशे कस्मिंश्चिद् महाविद्यालये संस्कृताध्यापकः पुस्तकादिलेखने व्यापृतस्तिष्ठति । तृतीयः पुत्रः डॉ० केशवरावमहोदयः मध्यप्रदेशान्तर्गत-गवालियरप्रदेशे महाविद्यालये संस्कृतवरिष्ठाध्यापकपदे कार्यं कुर्वाणः संस्कृतमहाकाव्यपरम्परादिग्रन्थानां प्रणेता विद्यते ।

ज्येष्ठपुत्रवधूः काशीहिन्दुविश्वविद्यालये संगीतमहाविद्यालयस्य संगीतानुसन्धानविभागे अनुसन्धानाध्यापिकापदमलङ्कुर्वाणा संगीतोपयोगिसंस्कृतमित्यादिग्रन्थलेखिका वर्तते । पौत्रः श्रीराममुसलगाँवकरमहोदयः, एम. ए., बडौदानगरे कस्मिँश्चित् महाविद्यालये संस्कृताध्यापनं विदधाति । अन्ये च पौत्राः कलाकुशलाः कलाकार्यालये कार्यं कुर्वन्ति । केचन पौत्राः संस्कृतविषये एम. ए.परीक्षामुत्तीर्णा रिसर्चकार्यमनुतिष्ठन्ति । पौत्री मीनाकुमारी-संस्कृत विषये एम. ए परीक्षामुत्तीर्य अनुसन्धानकार्यं विदधाति ।

पुण्यश्लोकेषु ब्रह्मभावमुपेतेषु महामहोपाध्याय-पूज्यपादश्रीशास्त्रिचरणेषु वयं श्रद्धाञ्जलिमर्पयामः ।

—वासुदेवद्विवेदिशास्त्रिणः

